कणे-हत- -तः या ५,११.
**कणीक**- पाउना ४,२६.
**कणीचि**- पाउ ४,७०.
**कणूक**[a]- पाउभो २,२,२७.
**√कण्ट्**[b], कण्टति निघ २,१४†.
**कण्ट**[c]- -ण्टेषु विध ४३,४३[d].
**कण्टक**[e]- पाग २,४,३१; ४,२,८०[21]; ५,२, ३६; -कः या ९,३२[f]; -कम् अप ३६, ११, १; -कैः आपश्रौ २२,४,२५; काश्रौ २२, ३,२२; हिश्रौ १७,२, २९; अप २६,५,२; विध ४३,३५.
काण्ट(क>)की[g]- -कीम् आपश्रौ १५,१,१; २;५,११; ७, १; ११,९; माश्रौ ११,१,१; २; ५,१४; ११,१०; १२,७; हिश्रौ २४,१,१; २; २,५; ११; ५,२; वैश्रौ १३,१ : ४.
कण्टक-मर्दन-(>काण्टकमर्दनिक- पा.) पाग ४,४,१९.
कण्टक-श(य्य>)य्या[h]- -य्यया कौसू ३५,२८.
कण्टक-शायिन्[i]- -यिनः वैध १, ८,१.
कण्टक-शाल्मलि[j]- -लिः विध ४३, १९.
कण्टकिक[k]- पा ४,२,८०.
कण्टकित- पा ५,२,३६.
कण्टकिन्- -किनः द्राग़ृ ४, २, ८; हिपि १ : ६; याशि १, ३७; नाशि २,८,४; -किनम् आग्निगृ २,३,५ : ३.
कण्टकिनी- -नीम् गौपि १, ४,४; सुध ५६.
कण्टकि-क्षीरिन्- -रिणः आगृ २,७,५; ४,१,१४†.
कण्टकि-ज- -जम् विध ६६,७; ८; -जानि विध ७९,५;६.
कण्टकिल- पा ४,२,८०.
?कण्टको(क-ऊ)षर-वत्- -वति काध २७७ : १[l].
**कण्टकार**[m]- (>काण्टकार- पा.) पाग ४,३,१५४.
**कण्टकारिका**[m]- पा, पाग ४, ३, १६७.
**√कण्ठ्** पाधा. भ्वा. आत्म. चु. उभ. शोके, कण्ठति निघ २,१४†[n].
**कण्ठ**[o]- पाउ १, १०३; -ण्ठः आश्रौ १२, ९, ४; अप; -ण्ठम् काश्रौ २५, १०, ७; माश्रौ; -ण्ठस्य ऋप्रा १३,१; पाशि २०; -ण्ठात् कागृउ ४६ : १४; भासू ३,१९; माशि १,११; १२; नाशि १,५, ५;६; -ण्ठे शांश्रौ ४, १४, २१; काश्रौ; -ण्ठेन माशि ४,४; -ण्ठेषु काश्रौ १६,१,१८.
कण्ठ-गडु- पाग २,२,३७.
कण्ठ-गत- -तेन माशि ४,५.
कण्ठ-(ग>)गा- -गाभिः वाध ३, ३२; बौध ९३; ९४; वैध २, १०,१.
कण्ठ-ज- -जाः शैशि ४२.
कण्ठ-तालु->°लव्य- -व्यौ शैशि ४४; पाशि १९; आशि १, २२.
कण्ठ-देश- -शे अप ४७,२,६.
कण्ठ-नासिका->°सिक्य- -क्यम् आशि १, २०.
कण्ठ-पृष्ठ-ग्रीवा-जङ्घ- -ङ्घम् पा ६, २,११४.
कण्ठ-प्रावृत->°ता(त-अ)वसक्थिका(का-अ)पाश्रयण-पादप्रसारण- -णानि गौध २,२०.
कण्ठ-बन्ध[h]- -न्धम् माश्रौ ५,१,५, ३५.
कण्ठ-बिल- -लम् आशि ८, ९; -लस्य आशि ८, २०;२१; -ले आशि ८,१०.
कण्ठ-मात्र- -त्रम् सुधप ८७ : ९.
कण्ठ-युक्त- -क्तम् नाशि १,३,३.
कण्ठ-शीर्ष-समाहत- -तः नाशि १, ५,८;९.
कण्ठ-सक्त- -क्ते वैगृ १, ५ : १२.
१कण्ठ-स्थान- -नम् नाशि १,७,२.
२कण्ठ-स्थान[h]- -नौ तैप्रा २,४६.
कण्ठ-हस्त- -स्तेन अप १,२७,४.
कण्ठे-विद्ध[p]->काण्ठेविद्धि- -द्धिः बौश्रौप्र ४५ : ४.
काण्ठेविद्धी-, काण्ठेविद्ध्या- पा ४,१,८१[q].
कण्ठो(ण्ठ-उ)क्ति[h]- -क्ति भाशि १२९.
कण्ठो(ण्ठ-उ)रस्- -रसोः तैप्रा २, २.
कण्ठो(ण्ठ-ओ)ष्ठ->°ष्ठ-ज- -जौ शैशि ४४; पाशि १९.
कण्ठोष्ठ्य- -ष्ठ्यौ आशि १,२३.
कण्ठ्य, ण्ठ्या- -ण्ठ्यः ऋप्रा १, ३८; शुप्रा ४,४९; -ण्ठ्यम् अप ४७,२,७; पाशि १६; याशि २,

---

*a*) =धान्य-स्तोक। वैप १ द्र.। *b*) या ९,३२ परामृष्टः द्र.। *c*) =कण्टक-। व्यु.?। *d*) °ण्ठेषु इति जीसं.। *e*) <√कृत् वा √कण्ट् वा कम्(<किम्-)+तप-(<√तप्) वेति या.। वैप १ द्र.। *f*) सकृत् तु. पाका.। *g*) विप.। मत्वर्थीयः अण् प्र. (पा ५,२,१०३)। *h*) विप.। बस.। *i*) =वानप्रस्थ-विशेष-। *j*) =नरक-विशेष-। *k*) =देश-विशेष-?। *l*) पाठः? °वत्-स्थल° इति शोधः संभाव्येत। *m*) =ओषधि-विशेष-। व्यु.?। *n*) धा. गतौ वृत्तिः। *o*) वैप १ द्र.। *p*) =ऋषि-विशेष-। *q*) °ण्ठे इति पाशि.।

५७; –ण्ठ्ययोः ऋप्रा १४, १२; –ण्ठ्यस्य ऋप्रा १३,१२; याशि २, २०; –ण्ठ्या शुप्रा १, ७३; –ण्ठ्याः शुप्रा १, ८४; ८, ३२; शैशि ३२४; याशि २, १; ९४; आशि १,७; –ण्ठ्यात् ऋप्रा १४, ३१; शुप्रा ४,५३; –ण्ठ्यानाम् शौच १,१९; –ण्ठ्याभिः बौध १,५,१८; –ण्ठ्ये ऋप्रा १४,६२; ऋत ५,३,५; –ण्ठ्यौ ऋप्रा २, ३२;६२; पाशि १७.

**कण्ठ्य-जिह्वामूलीय-तालव्य-मूर्धन्य-दन्त्यो(न्त्य-ओ)ष्ठ्य-यमा-(म-अ)नुस्वार-विसर्जनीयो(य-उ)पध्मानीय-नासिक्या(क्य-अ)नुनासिक्य-रङ्ग–** -ङ्गाः याशि २,१.

**कण्ठ्य-दन्त्य-पर–** -रे ऋत ४, १,७.

**कण्ठ्य-पूर्व–** -र्वेः शुप्रा ४,३८.

**कण्ठ्य-स्वर–** -रः भागृ ३,११; –रम् शुप्रा ७,२.

**√कण्ड्** पाधा. भ्वा. आत्म. पर. मदे; चु. पर. भेदने.

**कण्डन**[a]–>°नी– -नी शंध १३१; विध ५९,१९.

**कण्डन-प्रक्षालन–** -ने विध २३, ३५.

**क(ण्डक->)ण्डिका–** -के शुअ ३, १३६.

**१कण्डु,ण्डू**[b]– पाउभो २,१,५१[c]; पाग ३, १, २७; ५,२,९७[d]; ४, ३४; पावा ५,२, १०७[e].

**काण्डविक–** पा ५,४,३४.

**कण्डु(,ण्डू)-ल–** पा ५, २,९७.

**कण्डू√कृ>कण्डू-कृ(त>)ता**[f]– -ता बौश्रौ १६,२४ : १३; २६,१८ : ७.

**√कण्डूय** पा ३,१,२७; कण्डूयते आपश्रौ १०,१०,२; बौश्रौ ६,५: २१; भाश्रौ १०,६,१६:८,३; माश्रौ २,१,२,१३; वैश्रौ १२,९ : ७; हिश्रौ १०,२,१०;६७; कण्डूयति माश्रौ १०, ६, १६; कण्डूयाते बौश्रौ ६, ६ : ३[२]; कण्डूयस्व बौश्रौ ६, ५ : २२; कण्डूयेत माश्रौ २,१,२, १४; २,४, ४४; कण्डूयेत् कौगृ ३,११,१९; शांगृ ४, १२, १८; विध ७१, ५३; कण्डूयथाः बौश्रौ ६,६ : २.

**कण्डूति–** -त्याम् वैश्रौ १२, ९ : ७.

**कण्डूय**[g] बौश्रौ २८,९ : २३; वैश्रौ २१,२ : ९.

**कण्डूयन**[a]– -नम् विध २३, ६०; काश्रौ ७,३, २६; भाश्रौ १०,९,८; –ने काश्रौ ७,४, ८; मीसू ११,४,४९.

**कण्डूयनी–** -न्या काश्रौ १५,६,८.

**कण्डूयन-मन्त्र–** -न्त्रः हिश्रौ १,१,४१.

**कण्डूयन-स्वप्न-नदीतरा-(र-अ)ववर्षणा(ण-अ)मेध्य-प्रतिमन्त्रण–** -णेषु आपश्रौ २४, १, ४०.

**कण्डूयमान–** -नम् वैश्रौ १२,९ : ९.

**कण्ड्वा(ण्डु-आ)दि–** -दिभ्यः पा, पावा ३, १, २७; –दिषु पावा ३,१,९१; –दीनाम् पावा ६,१,३.

**कण्डर**[e]–(>√कण्डराय पा.) पाग ३,१,१२†.

**?कण्डिनी**[h]–(>काण्डिन्य– पा.) पाग ४, १,१०५, २,१११.

**२कण्डु**(>काण्डव–) १खण्डु– टि. द्र.

**कण्डूल–** पाउभोवृ २, ३,११२.

**कण्डोल(,क)–** (> कण्डोल-पाद–, कण्डोलक-पाद– पा.) पाउवृ १,६६; पाग ५, ४,१३८.

**कण्ड्वा**[i]– >√कण्ड्वाय पावा ३, १,१७.

**कण्व**[j]– पाउ १, १५१; पाग ४,१, १०५;२,१११; –ण्वः अप ४८, ८५†; निघ ३,१५φ; आपध १, १९,३; हिध १,५,१०५; ऋअ २,१, ३६;९,९४; बृदे ६, ३५; ३७; शुअ २, ४४; ३१०; ३, २४९; ४, ३९; साअ १, ५४; १३६; २२१; –ण्वस्य ऋअ २, ८,१; बृदे ६, ३६; या ३, १७; –ण्वाः[k] आपश्रौ १३, २१, ३†; २४, ८, २; बौश्रौप्र २१ : १; •३; हिश्रौ ९,५,४२†; निसू ४, ८ : ५; बृदे ४, ९८; तैप्रा १३, ९†; –†०ण्वाः कागृ २२, १; या ७, २†; –ण्वानाम्[k] आश्रौ १२, १३, १; वैध ४, ३, ५; –ण्वाय भागृ ३, ११ : ३; या ६, ६†; –०ण्वासः ऋप्रा ४, ६१†[l].

**१काण्व**[j]– -०ण्व आश्रौ १२;

*a*) भाप., नाप. (अन्नशोधन-साधन-)। *b*) गात्रविघर्षणे धा. वृत्तिः। *c*) <√कण् इति। *d*) °ण्डु– इति पाका., °ण्डू इति पागम., गण्डु– इति भाण्डा.। *e*) तु. पागम.। *f*) = उपध्वस्ता-। *g*) = कण्डूयित्वा। *h*) तु. पासि.। कुण्डिन– इति पाका., कुण्डिनी– इति भाण्डा.। *i*) = कृपा- (तु. पागम.)। *j*) वैप १ द्र.। *k*) वैप १, १०८३ v द्र.। *l*) वैप १,१०८४ c द्र.।

१३, १?[a]; आपश्रौ २४, ८, ३; बौश्रौप्र २१ : ३; वैध ४,३, ५; –ण्वः शांश्रौ १६, ११, २०; ऋअ २, १, १२; ४४; ८, १; ७६; ८१; बृदे ६, ३९; शुअ; –ण्वम् लाश्रौ ६,११,४; क्षुसू[b] १, ४ : ५; १५; २, १० : २०; ११ : १८; बौध २, ५, २७; –ण्वस्य बृदे ६, ५८; शुप्रा १, १२३; १४९; –ण्वाः चव्यू २ : ३६; –ण्वाय वौगृ ३,९,६.

काण्वी[c]– -ण्वीम् आश्रौ ४,७,४[2]; –ण्व्यौ बृदे ४,१००.

काण्व-कुत्स– -त्सौ आपध १,१९,७[d].

काण्व-गोपायन– -नौ अप्राय ३,५,८.

काण्व-पुष्करसादि– -दी आपध १, २८,१; हिध १, ७, ३७.

काण्व-रोहितकूलीय[e]– -ये लाश्रौ ६,११,४.

काण्वायन[f]– -नस्य चाअ २ : १६; ४: १; १४ : ६; –नाः बौश्रौप्र २४ : १; –०नाः ऋप्रा ८,२०†; –नौ ऋअ २,८,१४; साअ १, १२३; १२४; २१२; ३८४; २,९९५.

काण्वि[g]– -ण्वयः बौश्रौप्र ५:१.

काण्व्य– पा ४,१,१०५.

२काण्व– पा ४,२, १११; पावा ४,२,१०४.

कण्व-कश्यप[f]– -पेभ्यः आपश्रौ १३, ७, ५; वैश्रौ १६, ८ : २; हिश्रौ १०,४,६६.

कण्व-कश्यप-याचमान–वर्जम् काश्रौ १०,२,३२.

कण्व-कश्यप-संकृति– -तीनाम् माश्रौ ५,१,१,१७.

कण्व-कौत्स– -त्सौ हिध १, ५, १०९[d].

कण्व-चिकीर्षा– -र्षायाम् पावा ३, १,१४.

कण्व-पत्नी– -त्न्याः बृदे ६,३६.

कण्व-प्रभव[h]– -वः या ३,१७.

कण्व-बृहत्[e]– -हत् क्षुसू २,१० : १२; ११ : ५; ३, ४ : १ ; ३.

कण्वबृहत्-कारिन्– -री क्षुसू ३, ९ : ३; १३.

कण्व-रथन्तर[e]– -रम् आश्रौ ९,८, ११; शांश्रौ १३,१६,५; आपश्रौ २२, १२, १८; बौश्रौ १८, ७ : १३; हिश्रौ १८,२, १; क्षुसू २, १०:१०;११ : ३;१५:२८;२९; ३,३ : ९; १४; निसू १,१३ : १४; ७, ४ : २१; ९, ५ : १९; ६:३०;१० : ३५; –रस्य शांश्रौ १०,९,१४.

कण्वरथन्तर-मध्यन्दिन– -नम् क्षुसू २,१५ : २१.

कण्वरथन्तर-यौधाजय– -ये क्षुसू २,१५ : ३०.

कण्वरथन्तर-सामन्– -म्ना आपश्रौ २२,१०,४; हिश्रौ १७, ४,२०.

कण्व-वत् आपश्रौ २४, ८, ३; बौश्रौप्र २० : ४; वैध ४, ३,५.

कण्व-संकृति– -तीनाम् शांश्रौ १, ७,३.

कण्वा(ण्व-अ)ङ्गिरो(रस्-अ)गस्त्य-शुनक– -काः ऋअ ३,१०.

कण्वा(ण्व-आ)दि–वत् पावा ४, १, १५१.

√कण्वाय पा ३,१,१७.

कण्वा(ण्व-आ)श्रम– -मे विध ८५, ३०.

कत[i]– पाग ४,१, १०५[j];२, ८०[j]; ३, ९२[k]; –तः ऋअ २, ३, १७; –ताः[l] आश्रौ १२, १३, २ ; आपश्रौ २४,७,३; बौश्रौप्र ३५ : १; ३; हिश्रौ २१, ३,१०;१८; –तानाम् आश्रौ १२, १४, ६; आपश्रौ २४,९,११; वैध ४, १, ९?[m].

कात्य– पा ४,१,१०५; ३,९२; –०त्य आश्रौ १२, १३,६; १४, ६; २४, ७, ४; ५; ९, ११; बौश्रौप्र ३५ : ४; हिश्रौ २१,३, १०[2]; १२; वैध ४,१,९[n]; –त्यः बौश्रौ २,१५ : ६; ७, ४ : २४; ११, २ : ३०; २०, ४ : २६; ५ : ३३; १६ : ४०; ५१; बौध १,२,४७; ऋअ २, ३,१५; शुअ २,५३; साअ १, ६०; –त्यस्य शुअ २,३५९.

कात्यायन[f]– -नः बौश्रौ २३, ७ : २; कप्र २, ७,७; ९,४; ३, ७, ११; शंध २०७; काशु ७, १४; शुप्रा ८, ५३; –नम् शांगृ ६, १, १; शंध ११६ : ४१; –नेन काश्रौसं ३६ : १; कप्र ३,

*a*) °क इति पाठः? यनि. शोधः । *b*) =साम-विशेष- । *c*) =ऋग्-विशेष- । *d*) सपा. काण्वकु°<> कण्व-कौ° इति पामे. । *e*) साम्नोः द्वस. । *f*) वैप १ द्र. । *g*) ऋषि-विशेष- । *h*) विप. । उस. । *i*) कपि–, कत– इति भाण्डा. । कपिकत– इति पाका. । *j*) अर्थः व्यु. च ? । *k*) तु. पागम. । *l*) बहु. < कात्य– । *m*) काता° इति पाठः? यनि. शोधः । *n*) कात इति पाठः? यनि. शोधः ।

७,६; -नौ अप १,३,१.

कात्यायनी- पा ४, १.१८.

कात्यायन-महात्मन्- -त्मनः काशु ७,३९.

कात्यायन-वचस्- -चः कप्र २,९,२४.

कत-वन् आपश्रौ २४, ७, ४; ५; ९,११; बौश्रौप्र ३५ : ४; हिश्रौ २१, ३, १०[2];१२; वैध ४,१, ९![a].

कतिक पा ४, २,८०[b].

कतक- ( > कातक- पा. ) पाग ५, १,१३०[c].

कतम-, कतर-, कति- किम्- द्र.

कत्रि[d]- ( > कात्रेयक- पा. ) पाग ४,२,९५.

√कत्थ् पाधा. भ्वा.आत्म. श्लाघायाम्.

कत्थना- -ना बृदे १, ३५; ५१.

कत्थक->कात्थक्य[e]- -क्यः या ८, ५; ६; १०; १७; ९, ४१; ४२; साअ २,६९७[2].

†कत्पय[f]- -यम् निघ ४,३; या ६, ३ ❀.

√कत्र्[g] पाधा. चुरा. उभ. शैथिल्ये.

कत्रि- पाउभो २,१,२२६.

√कथ् पाधा. चुरा. उभ. वाक्यप्रबन्धे,

कथयति अप २४, ५, ४; कथयन्ति बृदे ३, ७३; ४, ३४; कथयामि अप ६९, १, ३; कथयस्व अप २९, १, २; कथयेत् अप २९, २,३; आपध १, ८, ६; हिध १, २, ९४; कथयेयुः द्राश्रौ ९,४,१५. कथ्यते जैश्रौका ८६; शंध; कथ्यन्ते बृदे १,९३.

कथन- -नम् कौशि ६५; -नात् माशि १६,१४.

कथा- पा ३,३, १०५; पाग ४, ४, १०२; -था विध २०, २५; -थाः आगृ ४, ६, ६; विध ३२,१०;-थाभिः गौपि १,४,२.

काथिक- पा ४,४,१०२.

कथित,ता- -तः अप २५, २, ४; विध ५, १९३; बृदे ६, १०१; -तम् अप २२, १०,१; २३,९, ५; वाध १२, १५; या ११, ७; -ता शंध १८२; विध २३, ४६; बृदे ३, १२३; -ताः विध ८२, ३; -तानि बृदे ३, १५४; -ताभ्यः बृदे ४, ६; -ते बृदे ३, ६९; पावा १,४,५१.

कथित-देवता->०त्य- -त्यम् बृदे ५,५.

कथिता(त-अ)नुकथन-मात्र- -त्रम् पावा २,४,३२.

कथेर- पाउना १,५७.

कथ्यमान- -नम् अप ७०, १, ३; बृदे १,१०५.

कथक[h]-(>काथक्य->काथक्याय-(न>)नी- पा. यक.) पाग ४, १,१०५;१८.

कथम् , कथा किम्- द्र.

कद्- किम्- द्र.

कदम्ब[i]- पाग ५,४,३[j]; पाउ ४,८२; -म्बः याशि १, ३६; नाशि २, ८,४; -म्बस्य माशि ४, १; अप २६,५,२.

कदम्ब-क- पा ५,४,३.

१कदर,ल[k]-(>°री,°ली- पाउवृ १, १०८। पा.)• पाउभो २,३,३८[1]; पाग ४,१,४१.

कदली-स्तम्भ- -म्भे कप्र ३,३,५.

२कदल[m]-(>कादलेय[b]- पा.) पाग ४,२,८०.

कदा किम्- द्र.

कदामत्त[n]- पा,पाग २,४,६९.

कदूरक[n,o] ( >कादूरक- पा. ) पाग ४, १,११२.

√कद्रा[p], कद्राति, चकद्राति या २, ३ ❀.

चकद्र[q]- -द्रः या २,३.

१कद्रु[r]- पाग ५, २, १००; -द्रु काश्रौ २२,४,१४; -द्रुः बौश्रौ २४,३८ : ९.

कद्रु-ण- पा ५,२,१००.

२कद्रु,द्रू[s]- पा २, ४,६३;४,१,७१; ७२; पाग २, ४, ६३; ४, १, १२३; -०द्रु सु ६, २;५; -द्रुवै बौगृ २, ८, १२; -द्रूः वाधूश्रौ ४,५० : १०[2]; ६४ : १; २; ५; •सु ५,३[2]; ९, २; बृदे ५, १४५; माशि १७†; -द्रूम् वाधूश्रौ ४, ६४ : २; सु ७,५; -द्रूवा सु २, २; ५,१; १०,१.

काद्रवेय- पा ४, १,१२३; -यः आश्रौ १०, ७,५; शांश्रौ १६,२, १३; सु २३, ३; ऋअ २, १०, ९४; साअ १, ६३१-३४; -याः

---

*a*) कात° इति पाठः ? यनि. शोधः। *b*) =देश-विशेष- ?। *c*) तु. पाका. कुतुक- इति भाण्डा.। *d*) =गर्दभी- (तु. पागम ३१५)। व्यु.?। *e*) =आचार्य-विशेष-। *f*) वैप १ द्र.। *g*) √कर्त्, कर्त्र् इति [पक्षे] BPG.। *h*) =ऋषि-विशेष-। व्यु. ?। *i*) =वृक्ष-विशेष-। व्यु. ?। *j*) तु. पागम.। *k*) नाप.। व्यु. ?। कन्दल- इति पाका.। *l*) =श्वेत-खदिर-। *m*) अर्थः व्यु. च ?। *n*) व्यप. व्यु. ?। *o*) तु. पासि.। खदूरक- इति पाका., खदूरक- इति भाण्डा.। *p*) यनि. नैप्र.<कद् √द्रा। *q*) तु. टि. विश्वकद्र-। *r*) विप., नाप. (वर्ण-विशेष-)।.*s*) नाप., व्यप.।

सु २९,२.

**कद्रु-नामन्**[a]- **-मा** सु २,१.

†**कद्रु-पुत्र**- **-त्रान्** आग्निगृ २,४,८ : ९; **-त्रेभ्यः** आग्निगृ २,४,८:५.

**कद्र्यच्,द्रीच्**- किम्- द्र.

?**कद्विन्दुकोष्ठ**[b]- **-ष्ठैः** कौसू४८,३०.

?***क,घ**[c]>**कघ-प्री**[c]- **-०प्रियः** शांश्रौ १०,१०,८†.

√**कन्**[d] पाधा. भ्वा. पर. दीप्तिकान्तिगतिषु, †**कनति** अप ४८,३; निघ २,६.

†**चाकनत्** आश्रौ ८, ११, ४[e]; अप ४८, ३; निघ २, ६; ३, ११; †**चाकन्** शांश्रौ १८,१,६; वैताश्रौ ३२,१०; निघ ४,३; या ६,२८∮.

†**कानिषत्** अप ४८, ३; निघ २,६; **कानिषः** आश्रौ ५,४,६†.

**कनक**[f]- पाउव्र २,३२; **-कम्** अप ४८,९१; ६८,३,४; अशां १२, ३; वाध २८, १७; विध ९, ४; ७८,२१; निघ १,२†; या १४, ३०; **-काः** अप १४,१,८;५२, २,५[g];६,२; **-कानाम्** अप १७, १,८; **-के** अप ६७,८,२.

**कनक-किञ्जल्क-तडित्-कल्प**-* **-ल्पाः** अप ५८,१,७.

**कनक-पिङ्ग(ल>)ला**- **-लाः** अप ६८,१,१३.

**कनक-मणि-रजत-शङ्ख-शुक्तय(क्ति-अ)ब्दो(?ब्जो)पल**- **-लानाम्** सुध २७.

**कनक-रजत**- **-तम्** विध ७८,४७.

**कनका(क-आभा>)भ**[a]- **-भः** माशि १,१३; नाशि १,४,१.

***कन**[c]->१**कनिष्ठ,ष्ठा**- पा ५,३,६४; पा,पाग ४,१,४;**-ष्ठम्** वैगृ ६६: २; **-ष्ठया** वैश्रौ १२,१७ : १७; १८; कागृ २४, १३; **-ष्ठायाम्** माशि २,२; नाशि १,७,४.

**कनिष्ठ-कुल**->**कनिष्ठकुलीन**[h]- **-नस्य** शांश्रौ १४,३१,१.

**कनिष्ठा(ष्ठ-अ)ङ्गुलि-नाह**[i]- **-हाः** वैश्रौ ११,११ : २.

**कनिष्ठा(ष्ठ-अ)ङ्गुलि-मूल**- **-लम्** वैगृ १,५ : ७.

**कनिष्ठा(ष्ठा-अ)ङ्गुष्ठ**- **-ष्ठयोः** कप्र १,१,७.

**कनिष्ठाङ्गुष्ठ-योग**- **-गेन** शंध ४५७-४५८ : ४.

**कनिष्ठा(ष्ठा-आ)दि**- **-दि** वैगृ ३, २२ : १०.

**कनिष्ठाद्य(दि-अ) ङ्गुल्य (लि-अ)ग्र**- **-ग्राणि** वैगृ २,६ : ८-९.

**कनिष्ठाद्ये(दि-ए)कैका(क-अ) ङ्गुलि**- **-ल्या** वैश्रौ १२,१७:१६.

**कनि(ष्ठ-क>)ष्ठिका**[c,j]- पाग ५,३, १०७[k]; **-कया** काश्रौ ७, ७,१३; आपश्रौ १०, २४, ८; आग्निगृ २,३,१ : ९; वैगृ ६६ : २; **-?कस्य** वैगृ १, २ : ८[l]; **-का** कौशि ३८; **-कायाम्** आग्निगृ २, ६, १ : १०; शैशि १७९: **-के** वैश्रौ १२, १० : २;१२ : २१.

**कानिष्ठिक**- पा ५, ३, १०७.

**कनिष्ठिका-तल**- **-लयोः** शंध ५४.

**कनिष्ठिका-तस्**(:) आपश्रौ १०,५,१२; भाश्रौ १०,३,१९; माश्रौ १,४, १, ३; २,१,४, ३; हिश्रौ ७,१,३८.

**कनिष्ठिका-प्रभृति**- **-तिभिः** माश्रौ २,१,४,३.

**कनीयस्**- पा ५, ३, ६४; **-यः** शांश्रौ १५,२२, १; आपश्रौ ४, ८,५†;६,११,२;१६,२७,२१†; बौश्रौ १, १२ : ५४××; माश्रौ; **-यःऽ-यः** आपश्रौ १०, ६, ९; भाश्रौ १०,४,६; वैश्रौ १२, ७ : २; हिश्रौ १०,१, ४२; **-यसः** बौशु २ : १; **-यसम्** जैगृ १, ३ : ५; **-यसा** या ३, १३; **-यसाम्** बौश्रौ १८, २६ : २; २६, ३३ : १; विध ३२, ४; **-यसि** द्राश्रौ ९,३, २१; लाश्रौ ३, ७, ७; **-यांसः** शांश्रौ १५, २६, १[2]; तैप्रा १६, १३†; **-यांसम्** बौश्रौ २, ९ : २२; आपशु १०, १४†; बौशु ५: १२†; हिशु ३, ५४†; या ३, १३; **-यांसि** वाधूश्रौ ४,१०० : १; **-यांसौ** निसू ६, १२ : ९; **-यान्** वाधूश्रौ ३, ८३ : १०; निसू २, १२ : २८; लाश्रौ ६, ७, ५; बौध २, ६, ३२†; १०, ८; बृदे ४,१२; ६,३६; ७,१३; १५६; या २,१०.

---

*a*) विप. । बस. । *b*) अर्थः व्यु. च?। *c*) वैप १ द्र. । *d*) या ४,१५ परामृष्टः द्र. । *e*) पाभे. वैप १,११७१ a द्र. । *f*) =सुवर्ण-, तद्वर्णवत्- । *g*) =[शनैश्चरसुत-] ग्रह-विशेष- । *h*) अपत्यार्थे खः>ईनः प्र. (पा ४,१,१३९)। *i*) कस.>बस. । *j*) =कनिष्ठा- । *k*) **कपिष्ठिका-** इति [पक्षे] पासि.. **कपिष्टिक-, पिष्टिका-** इति पाका. । **कनिष्ठिक-, पिष्टिका-** इति [पक्षे] भाएडा. । *l*) पाठः? **कनिष्ठस्य** (तु. मूको.) यद्वा **कनिष्ठकस्य** इति शोधः ।

कनीयसी- -सी अप ५९,१, ६; -सीम् वैश्रौ २,४ : ९; जैगृ १, २० : ३; -स्याः शंध ५७; ४५६.

कनीयसाम्-उकृथ्य- -क्थ्यः बौश्रौ १८, २६ : २; २६, ३३ : १.

कनीयो(यस्-अ)क्ष(र>)रा[a]- -राभिः क्षुसू १,७ : २६.

कनीयो-वादिन्- -दी भासू ३, ६.

**कनक-** प्रभृ. √कन् द्र.

**कनखल**[b]- -ले विध ८५,१४.

**कनल**[c]- (>कानलक[d]-) पा ४, २, ८०.

**१*कनि**[e]->१†कनीन,ना[e]- -नः आश्रौ ९,५,१६; -नाः शांश्रौ ८,२०,१; -ने[f] आपश्रौ ७,५,१; माश्रौ ७, ४, १; वैश्रौ १०,४ : १३; हिश्रौ ४,१,६२.

**२कनि**->कनी[e]- -†नीनाम् आपमं ५,१२; आगृ १,४,८; वागृ १६, ७; या १०,२१ϕ.

१*कन्य[e]->†कन्य-(ल>)ला- -ला आपमं १,४,४; बौगृ १,४, १७; गोगृ २, २, ८; जैगृ १, २१ : २०[2]; द्राग ृ१,°३, २४; -लाः अअ १४, २; अप्रा २, १,१.

२क(न्य>)न्या[e]- पाउ ४, ११२; पाग ६, २, १९४: फि ७६; -न्ययोः या ४,१५; -न्या आश्रौ २,८,३†; ३,७,६†; ५,२०, ६; †शांश्रौ ६, १०, २; १२,२१,३; ४; हिश्रौ २२, ३, ४†; पागृ १,६,२†[?g]; आग्निगृ ३,१०,१ : ६; कागृ १७,२; बौगृ ४,१, ९-११; बौपि ३,५,२; मागृ १,८, २; वागृ १३, ४; †१४, १८[?g]; २१[?g]; वैगृ ३,१ : ३; जैगृ १, २१ : २३[?g]; कप्र १, ६, १३; १४; अप १,४३,८;४४,३;१४, १,८; ६८,२,१९;४४;६९,४,५; सुधप ८८:६; बौध ४, १,१७[2]; विध २४,४०; ४१[3]; वाध १७, ६९; ७३[2]; शंध २७६; २९८; ऋअ २, ८, ९१†; बृदे ५,५८; ६,७६;९९; १०१†; १०७; या २, २७; ४,१५ϕ; आज्यो ३, ६[2]; १४, १; ५; -†न्याः आपश्रौ १७, १८, १; आपमं १, ५, ७; आगृ १, ७, १३[3]; कौगृ १, ११, ४[3]; शांगृ १, १८, ३[3]; †कागृ १७, २; २५, ३०; ३५; बौपि २, ३, १२[h]; मागृ १, ११, १२; २, १४, १५; वागृ १३, ४†; हिपि १२ : ११; काध २८० : १; बृदे ३, १४६; -न्यानाम् शांगृ १, २८, २२; बौगृ ३, १३, ८; बौपि २, ३, ११, ३, ६, १; शंध ३४९; या १०, २१; आज्यो ३, ५; -न्याम् आश्रौ ५, १३, १७; माश्रौ ७, १६, १४; माश्रौ ४, ७, २; आगृ १, ५, २; ६,१; कौगृ १, २, २; ७, १[3]; ८, १३; ९, १३; शांगृ १, ६, ४; ११, १; २;४; १२,११; १५,९; आग्निगृ १,६,१ : २; कागृ १७,१; २१, १; मागृ १, ७, ८; १०; ८, ९; ११; १०,७; ११, ६; वागृ १०, ८; १३, १; ६; १४, १३; वैगृ ३, १ : ४; ६-८; २ : २; ५, ९ : ८; १०; ६, १२-१३ : १; अप १, १०, २; ३६, ६,१; ६८, ४, २; वाध १, ३१; १७, १७; ७०; ७१; बौध ४,१,१२; १३; विध ५, ४५; १६०; २४, ३३; ७८, ३७; गौध ९, ३२; काध २८१ : ८; बृदे ५, ५६; ६६; ७६; आज्यो ३, ६; १३, ६; -न्यायाः कौगृ १, २, ३; शांगृ १, ६, ६; कागृ १४, ६; २५, २०; वागृ ३, ३; ४, २५; १३, २; वैगृ ३, १९ : १०; ५, ११ : ७; ६, ४ : २; १३ : ३; अप ३६, ६, ३; बृदे ५, ६०; -न्यायाम् शंध ३३२; ३६६; -न्यायै कागृ १८, १; -न्यासु बौध १,५,९४; काध २८१ : २; -०न्ये मागृ १,१०,१७†.

कन्यका- पावाग ७, ३, ४५; •-का कप्र १, १०, १२[i]; -काम् कप्र १, ६,१५; -के[j] या ४,१५.

कन्या-काम- -मः अप ३६, ६, १.

कन्या-कुमार- -रौ वैगृ ७, २ : ७.

कन्या-गमन-प्रायश्चित्त- -त्तम् वैगृ ६,१२ : १४.

कन्या-गृह- -हम् वैगृ ३, २ :

*a*) वैप २, ३खं. द्र.। *b*) =तीर्थ-विशेष-। व्यु. ?। *c*) अर्थः व्यु. च ?। विप. इति MW.। *d*) =देश-विशेष- ?। *e*) वैप १ द्र.। *f*) विप. (वेदि-)। *g*) पाठः? °न्याः इति शोधः (तु. कागृ २५, ३० प्रमृ. Old. च)। *h*) कन्यानाम् इति मैसु.। *i*) नारी इति BI ?.। *j*) वैप १, १०८६ *d* द्र.।

४; १०.

कन्या( न्या-अ ) ग्न्यु (ग्नि-उ)-पयम- -मेषु गौध १८,१९.

कन्या(न्या-अ)दातृ-याजक- -कानाम् सुधप ८६ : ४.

कन्या-दान- -नम् विध २४, १९; ३७,१७; बौध १,११, २; -ने बृदे, ३, १४४; -नेन वाध २९,१८.

कन्या-दूषक- -कः शंध ३७७:१२

कन्या-दूषण- -णम् बौध २,१, ४४.

कन्या-दूषिन्- -षी शंध ३७८; ४१४.

कन्या-दोषिन्[a]- -षी शंध ४१५.

कन्या( न्या-अ )नृत- -ते वाध १६,३४.

कन्यानृत-गवानृत- -तम् अप ९, ३,४.

कन्या-प्रजा( जा-अ )र्थ- -र्थम् आज्यो ८,५.

कन्या-प्रद- -दः वैगृ २,१५ : १४;३,२:५;-दाः विध २४,३८.

कन्या-प्रदान- -नम् आज्यो ८,७

कन्या-भाग- -गाः शंध २९८.

कन्या-वत्- -ते वौध १,११, ४; गौध ४,८.

कन्या-विवाह- -हः वैध४,८,६.

कन्या-सहस्र- -स्रेण अप २०, २,७

कन्या-हरण- -णम् वैगृ ३, १ : १०.

**कनिक्नत्**- -क्नतम् अप्रा ३, २, १६†[b].

**१कनिष्ठ,ष्ठा**- *कन- द्र.

**२कनिष्ठ,ष्ठा**[c]- पाग ४, १, १२६; फि २२; -ष्ठः बौश्रौ २, ९ : २०; कौसू ८१, ३३; ८५, २४; -ष्ठम् शांश्रौ १५, २०, १; सु ३०, ३; विध २६, २; -ष्ठस्य आपश्रौ २, १९, ४; ६, ४, १; बौश्रौ ३,४ : १८; भाश्रौ ६, ९, १; २; वाश्रौ १,१,१,४१;५,२, १२; हिश्रौ २,२,१९;३,७,१९; वाध १७,४४; -ष्ठाः काश्रौ २२, ४,५; निसू ६, ११ : ३१; ३२; -ष्ठानाम् शांश्रौ १४, ७२, १; आपश्रौ २२,५,१४, हिश्रौ १७, २,४२.

कानिष्ठिनेय- पा ४, १, १२६; -यस्य आपश्रौ २, १९, ४; ६, ४,१; बौश्रौ ३,४ : १९; भाश्रौ ६, ९, १; २; वाश्रौ १,१, १, ४१; ५, २, १२; हिश्रौ २, २,१९; ३,७,१९.

कनिष्ठ-जघन्य[d]- -न्याः आगृ ४, २,९.

कनिष्ठ-तस् (:) आपश्रौ ६,७,८.

कनिष्ठ-पूर्व- -र्वम् वैगृ ५, ६ : १३; -र्वाः शांश्रौ ४, १५, ४; पागृ ३, १०, २३; गौपि १, २, ३७; ४,१४.

कनिष्ठ-प्रथम,मा[d]- -माः आगृ ४,४, १२; कौगृ ५, २,९; आग्निगृ ३, ४,४ : २२; ५, ३ : ५; ४ : ६; १४; २२; बौपि १,३ : ४; १६; २३; ३०; ३, ४, १६; १९; वैगृ ५, ५ : ४; हिपि ४ : ७; -मान् मागृ २,७,५.

कनिष्ठ-भार्या- -र्याम् शंध ३९७.

कनिष्ठ-यज्ञ- -ज्ञः निसू ६, ११ : ३०.

**कनिष्ठिका**- प्रमृ. कन- द्र.

**कनी**- २कनि- द्र.

**कनीत**->कानीत[c]- -तः बृदे ६,७९; -तस्य ऋअ २, ८, ४६†; -ते शांश्रौ १६,११,२३†.

**१कनीन**- १*कनि- द्र.

**२कनीन**[c/e]-> कानीन- पा ४, १, ११६; -नः वाध १७, २१; शंध २९१; बौध २, २, २४∮; विध १५, १०; -नम् बौध २, २,३२.

कानीन-सहोढ-पौनर्भव-पुत्रि-कापुत्र-स्वयंदत्त-क्रीत- -ताः गौध २८, ३४.

कनीन-( क> )का[f]- -†का बृदे ४, १४४; या ४, १५; -के या ४, १५.

**कनी**( नक > )**निका**[g/h]- -†का आपश्रौ १०,७,१; बौश्रौ ६, २: १७; २१,८:११; भाश्रौ १०, ४, १२; माश्रौ २, १,१, ३८; वैश्रौ १२,७ : ६; हिश्रौ १०,१, ४४; मागृ १,११,८; -काम् बौश्रौ ६, १२ : १५†; अप २७, २,१; २८,२,१; -के विध ९६, ९२; तैप्रा ४,११†.

कनीनिका-मूल- -ले विध ६२,१.

**कनीनी**[h]- >कनीन्य( नी-अ )ग्र-सम--स्थौल्य[i]- -ल्यम् विध ६१,१६.

**कनीयस्**- कन- द्र.

**कन्त**- २क- द्र.

**कन्तप**[j]- -पः या ९, ३२[k].

---

*a*) उस. उप.?, यद्वा ऊकाराऽभावः वैकल्पिकः उसं. (पा ६, ४,९०)। *b*) पाभे. वैप १,१०८५ l द्र.। *c*) वैप १ द्र.। *d*) विप.। बस.। *e*) पाप्र. तु <२कन्या-। *f*) वैप १,१०८६ r,s द्र.। *g*) = अक्षि-तारक-, कनिष्ठाङ्गुलि-। *h*) =कनिष्ठिका-। व्यु.?। *i*) विप.। षस.>तृस.>बस.। *j*) =कण्टक-। व्यु.?। *k*) पृ ८३० e टि.।

**कन्ति-**, १कन्तु- २क- द्र.
**२कन्तु-** √कम् द्र.
√***कन्थ्** [a] (आवरणे) > क(न्थ>) न्था[a]- पाउना २, ४[b]; -न्था पा २, ४, २०; ६, २, १२४.
कान्थिक- पा ४, २,१०२.
कन्था-पलद्-नगर-ग्राम-ह्रदो (द-उ)त्तरपद- -दात् पा ४,२, १४२.
**कन्थक**[c]- ( > कान्थक्य-, °कथाय (न>)नी- पा. यक्र.)पाग ४, १,१८;१०५.
**कन्थु**[c]- (>कान्थव्य- पा. )पाग ४, १,१०५.
√**कन्द्** (वधा. )पाधा. भ्वा. पर. आह्वाने रोदने च, आत्म.वैक्लव्ये[d] वैकल्ये च.
१कन्द[a]- (>कन्दी- पा.) पाउव्र ४,९८; पाग ४, १,४१[e].
कन्द-मूल-फल- -लम् बौगृ ३, ३,१८.
कन्द-मूल-फल-शाक-भक्ष- -क्षाणाम् बौध ३,३,८.
कन्द-मूल-फल-शाका(क-आ) दि- -दीनि वैध ३,५,७.
कन्द-मूल-फल-शाकौ (क-ओ) षधी- -धीः बौध ३,२,३.
कन्द-मूल-भक्ष- -क्षाः बौध ३,३,३.
**२कन्द**[f]- (>१कन्दर[g]- पा. ) पाग ४,२,८०.
**२कन्दर**[h]- ( >कन्दरी- पा. )पाउव्र ३,१३१; पाग ४,१,४१; पावाग ८,२,१८[i].
**कन्दर्प**[j]-(>कान्दर्प पा.) पाग ४, १, १०४.
**कन्दल**[k]- (> कन्दली-, कन्दलित- पा. यक्र.) पाउभो २, ३, ९३[l]; पाग ४, १, ४१; ५, २, ३६; पावाग ८, २,१८[i].
**कन्दु**[l]- पाउ १, १४.
**कन्दुक**[l]-(>कान्दुक-,कन्दुक-प्रस्थ- पा. यक्र.) पाउभो २, २,२२[m]; पाग ४,१,१३०; ६,२,८७[n].
कन्दुक-बदरी- कटुकबदरी- टि. द्र.
**कन्ध(र>)रा**[o]- -रा कप्र १,७,८.
**१कन्य-** २क(न्य>)न्या २कनि- द्र.
√**कप्** √कम्प् द्र.
**क-प-** प्रभृ. १क- द्र.
**कपट-** पाउव्र ४, ८१; पाग २, ४, ३१.
**कपटु**[p]- पाग ४,१,७३.
कापटव[p]- -वः निसू ४,८ : ३५.
कापटवी- पा ४,१,७३.
**कपरि[ल.लि]का**[f]- पावाग ८,२,१८[i].
**कपर्द**[q]- -र्दाः वागृ ४,१८.
कापर्दि[r]- -र्दय निसू ९, १३ : ४.
कपर्दिक- -कान् पागृ ३,५,२.
†कपर्दिन्- -र्दिनम् बृदे ५, ११९; -र्दिने शांगृ ५, ६,२; अप ६६, ३,२[२]; गौध २६, १२; शुप्रा ५, ३७.
कपर्दिनी[s]- -नी नाशि १,२, १०.
**कपल**[t]- -लम् शांश्रौ १८, ७, ८; २०.
**कपाट**[u]- पाउभो २, २,१००; पाग २, ४,३१.
कपाट-घ्न- पा ३,२,५४.
कपा(टक>)टिका[v]-(>कापा-टिक- पा.) पाग ५,३,१०७.
**कपाल**[w]- पाउ १, ११८; फि ६७; -लः आग्निगृ ३,४,४ : ७; -लम् आश्रौ ३, १४, १०; काश्रौ; -लयोः माश्रौ ४,३, ४४; वैश्रौ १५,५ : १; -लस्य भाश्रौ ६, १५, ७; -लाः हिश्रौ १६, ८, २३; -लान् तैप्रा ६, १४†; -लानाम् आपश्रौ ८,९,१४†××; बौश्रौ; -लानि शांश्रौ ४,१४, २५; काश्रौ; बौश्रौ २०,१२ : ११[x]; या ७,२४; -ले आश्रौ ३, १३,९;आपश्रौ १,२२,३;२३,३; ३,१०,१†;१२,४,१;९; काश्रौ; पावा ६, ३, ४५; -लेन काश्रौ २, ४, २६; हिश्रौ १, १, ४३; आगृ ४, ५, १०; -लेभ्यः आपश्रौ १, २४, ६; भाश्रौ १, २५,१०· माश्रौ १, २, ३, १९;

a) वैप ३ द्र. । b) < √कन् इति । c) = ऋषि-विशेष- । व्यु ? । d) √कद् इति [पक्षे] BPG. । e) अर्थः ? । f) अर्थः व्यु. च ? । g) = देश-विशेष- ? । h) = दरी- । व्यु. ? । i) तु. पागम. । j) व्यप. । व्यु. ? । तु. पाका.; किंदर्भ- इति भाएडा., ?किदर्भ- इति [पक्षे] पाका. । k) पृ ८३३ j द्र. । l) < √कन्द् । m) < √कम् । n) १कटुक- इति पाका. । o) = ग्रीवा- । वैप ३ द्र. । p) = आचार्य-विशेष- (तु. पाका ४,१,७८;३,८०) । q) = चूडा-, वराटक- प्रभृ. । व्यु. ? । r) = आचार्य-विशेष- । कापटवः इति मूको. । s) = मूर्च्छना-विशेष- । t) = भाग- । व्यु.? । u) नाप. । व्यु.? । < कं √पट् [गतौ] इति अभा. । v) ह्रस्वार्थे कन् प्र. । w) वै १ द्र. । x) काप.° इति मुपा. ? यनि. शोधः (तु. भव-स्वामी) ।

–लेषु आपश्रौ १,२३-२४,६;८, ६,५; ९,१३,१०; १९,२१,२२; २२,८; बौश्रौ; –लैः बौश्रौ १०, १२ : १२; वैश्रौ १८, ७ : ४; हिश्रौ १५,८,४३; अप्राय ६,२.

कापालिक[a]– -कः काध २७८ : १०.

कपाल-करण– -णे बौश्रौ २७,३:१.

कपाल-चिह्न-ध्वजा-> °जिन्– -जी शंध ३७९.

कपाल-धर्म– -र्मः हिश्रौ ३,८,४४.

कपाल-नाश– -शे बौश्रौ २८,११:५.

कपाल-प[b]– -पान् आग्निगृ २,१,३ : २२; आपमं २,१४,१; भागृ १, २३ : १४; हिगृ २, ३, ७.

कपाल-मन्त्र– -न्त्रेण आपश्रौ ८, १०,२;१३,१८; १२,४,९; २४, ३,२४; भाश्रौ ५,१४, ९; वाश्रौ १,४, ४,३२; हिश्रौ ३,८, ५८; ५, ४, २२; ८, १, ५२; –न्त्रैः बौश्रौ २०,८ : २०.

कपाल-मात्र– -त्रम् बौश्रौ २८,४ : १३.

कपाल-योग– -गम् आपश्रौ १,२३, २; भाश्रौ १, २४, ६; –गात् हिश्रौ १,६, ३७; –गे भाश्रौ १, २५,१०; हिश्रौ १,६,४२.

कपाल-वत् आपश्रौ २,१०,४; वैश्रौ ५,८ : ५; मीसू ६, ६, ६; १०, १,२२;२६.

कपाल-विकार– -रः मीसू १०,१, ३८.

कपाल-विमोचन– -नम् आपश्रौ ४, १४,५[c]; १२, २५,१३; हिश्रौ ४,४,७१; –नात् माश्रौ २,३,७, ११.

कपाल-वृद्धि– -द्धिः बौश्रौ २७,३ : २.

कपाल-वृद्धि-ह्रास– -सौ वैश्रौ २०,२८ : १२.

कपाल-शे(ष>)षा– -षाः[d] आग्निगृ ३,४,३ : ९; बौपि ३,४,८.

कपाल-शे(ष-उ)षोदक– -कम् वैगृ ७, २ : १२.

कपाल-संयोजन– -ने बौश्रौ २०,८: १२.

कपाल-संतपन[e]–> °ना(न-अ)ग्नि– -ग्निना बौपि ३,१, ११[f]; वैगृ ५, ५ : २९; ७, २ : १३.

कपालसंतपनीय– -येन गौपि १,१,२०.

कपाल-सामान्य– -न्यम् बौश्रौ २७, १४ : २६.

कपाल-स्थान– -ने वैश्रौ ९,१ : ११.

कपाल-ह्रास– -सः बौश्रौ २७,३:२;

कपाला(ल-अ)वशे(ष>)षा– -षाः वैगृ ५,५ : १५[d].

कपा (ल-क>) लिका–(२कापालिक– पा.) पाग ५,३,१०७.

कपालिन्– -लिने वैगृ ५,२ : ३०; –ली अप ४३, ५, १७; वाध १६, ३३; शंध ३७७ : ७; बौध २,१,३.

कपालो(ल-उ)पधान[e]– -नम् काश्रौ ५, ८, १५; –नात् बौश्रौ ३, २४ : ७; २०, ६ : २८; भाश्रौ ५,१४,८; ८, १६, ४; –नानाम् बौश्रौ २०,८ : १७[g]; –ने बौश्रौ २२,१८ : १९.

कपाश्रितोष्मजात– १क– द्र.

कपि[h]– पाउ ४, १४४; पाग ४,१, १८;४५[i]; १०५[i]; ५, १,१२४; २[i], १८; ९७; १००;३,१०८[i]; ६, ३, ११९[i]; –पयः[k] बौश्रौप्र २६ : १;३; –पिः आपश्रौ १४, २९, ३†[i]; हिश्रौ १५, ७, १६†[i]; आग्निगृ ३, ७, १ : १४†[i]; बौपि १, १७ : १३†[i]; या ३, १८[२i]; बृदे २, ११६[i]; शुअ१,१२८[m], –पीनाम्[m] आश्रौ १२,१३,२; आपश्रौ २४,७,८; हिश्रौ २१,३, १०; –पेः हिश्रौ २१,३,१०[m]

कपी– पा ४,१,४५.

कापिक– पा ५,३,१०८.

कापेय[n]– पा ५,१,१२७; –याः आपश्रौ १४,७, २०; हिश्रौ १, ४,६; ९,८,४५.

कापेयी– -यी आपश्रौ १४, ७,१९; हिश्रौ ९,८,४४.

काप्य– पा ४,१, १०५; १०७; ५,१,१२४.

काप्या(प्य-आ)ध्वर्यव[o]– -वम् आपश्रौ २३, ११, ११; हिश्रौ १८,४,१५.

काप्याय(न>)नी– पा ४,१,१८.

कपि-केश– फि ७३; –शाः बौश्रौप्र ४७ : ६[m].

---

*a*) = भिक्षु-विशेष- । तेनचरतीयः ठक् प्र. (पा ४,४,८) । *b*) = बालग्रह-विशेष- । उस. उप. <√पा (पाने) । *c*) = मन्त्र- [तु. तै १,१,७,२] । *d*) सपा. °शेषाः<>°लावशेषाः इति पाभे. । *e*) उप. भावकरणयोः ल्युट् प्र. । *f*) °सान्तपन° इति R. । *g*) = मन्त्र- । *h*) बप्रा. । वैप १ द्र. । *i*) = वानर- । *j*) व्यप. । कत– टि. अपि द्र. । *k*) बहु. <कापेय–, काप्य– । *l*) वृषाकपिः इत्यस्योत्तरांशः । *m*) = ऋषि-विशेष- । *n*) भावाऽपत्यायर्थे ढक् > एयः प्र. । *o*) विप. । बस. ।

१कपि-ल- पा ५,२,९७.

कपि-श- पा ५,२,१००.

कपि-शी(र्षन्>)र्ष्णी[a]- -र्ष्ण्याम् द्राश्रौ ११,२,३; लाश्रौ ४,२,२.

कपि-श्यापर्णेय- पाग ६,२,३७.

क(पि>)पी-व(त्>)ती- पा ६,३,१२०.

कप्या(पि-आ)दि- -दयः अप ६९,३,४.

कप्यु(पि-उ)ष्ट्रे(ष्ट्र-इ)भ-गवा(गो-आ)दि- -दीनाम् अप ६९,३,३.

१कपिञ्जल[b]- पाउभो २, ३, ९९[c]; -०ल कौसू ४६, ५४[d]; या ९, ५[e]; -लः अप १, ३६, ६; बृदे ४,९३; ६,१५१; या ३, १८$\phi$; ९,४;-लम् शंध २२३; -†लान् आपश्रौ २०, १४, ५; वाश्रौ ३, ४,३.२२†.

१कापिञ्जल- -लानि कौसू ४६, ५३;५४; अप १,३६,६.

कपिञ्जल-मांस- -सेन पागृ१,१९,८.

कपिञ्जला(ल-आ)दि- -दयः शुअ ३,४३; -दीन् काश्रौ २०,६,६.

कपिञ्जलादि-वत् काश्रौ २१,१,१२.

२कपिञ्जल[f]- पाग ४,१,११२[g]; -लः अअ २,२७; ७,९६.

२कापिञ्जल- पा ४,१,११२; -लाः बौश्रौप्र ४७ : १.

कपित्थ[h]- पाग २,४,३१; ४,२,८०[i]; ५,२,१३५; ६,३,११९[j].

कपित्थ-क[k]- -कः भागृ २,२१:१०.

कपित्थि(>न्)नी- पा ५,२,१३५.

कपित्थिल[l]- पा ४,२,८०.

१कपि-ल- कपि- द्र.

२कपिल[m]- पाउ १,५५; -०ल विध ९८, ८५; -लः वैगृ ३, २१ : १०†; अप २९, २, ४; ४३, ३, ४†; बृदे २, ६७; ७, १४१; बौध २, ६, ३०; -लम् ऋप्रा १७,१८; -लाः याशि २,१; ३; -लान् आग्निगृ २, ७, ७ : ९; -लान् आग्निगृ २,४,८:६.

कापि(ल>)ला- -ले अप १, ३,१.

कपिल-रोमन्[n]- -माणः अप ६८, १,९.

कपिला(ल-अ)र्के(र्क-इ)न्दु-मण्डल[o]- -लम् अप ६४,९,३.

कपिललाट[p]- -टः कौसू ४५, ४†; -टस्य माश्रौ १,८,५,१९; वाश्रौ १,६,७,१;४; -टात् माश्रौ १, २,५,१८.

कपिला[q]- -लानाम् आग्निगृ २,४,८: २१; अप ७२, ४, ७; -लाम् आग्निगृ २,५,१ : ४४; अप ८, २,३; विध ९२, ९; -लायाः आग्निगृ २,७,७:८; अप ३८,१, ६; -लासु अप ७२,४,७.

कपिला-प्रदान- -नम् शंध २५०.

कपिलि(क>)का[r]-(>कापिलिक- पा.) पाग ४,१,११२.

कपिवन[s]- -नः निसू ८,४ : २९.

कापिवन[t]- -नम् आश्रौ १०,२,३; -नेन आपश्रौ २२,१४,२०;हिश्रौ १७,६,१५.

कपिष्ठिक- > कापिष्ठिक- कनिष्ठिका- टि. द्र.

कपिष्ठल[u]- पाग २,४, ६९[j]; -लः पा, पावा ८,३,९१.

कापिष्ठलि- (>कापिष्ठल्या- पा, पावा.) पाग ४, १, ८०; पावाग ४,१,७९.

कपिष्ठल-कठ- -ठाः चव्यू २ : ३.

कपिष्ठि(क>)का- > कापिष्ठिक- कनिष्ठिका- टि. द्र.

कपी- कपि- द्र.

कपुच्छल[v]- -लम् गोगृ २, ९,१८; कप्र ३,६,७.

कपुजा[v]- -जा कागृ ४०,२.

कपुष्णिका[v]- -का कप्र ३, ६,७; -काम् गोगृ २, ९, १२; १८; -कायाम् गोगृ २,९,१४.

कपुस्- > °स्-विपर्वा-रोदाका-वृक्कावती-नाडा-निर्दहन्ती[w]- -न्तीनाम् वैताश्रौ ५, १०.

कपूय[h]- -यम् या ५, २४; -याः या ५,२४; ६,१९.

†?क-पृथ्[s]- -पृत् आश्रौ ८, ३, ३०; शांश्रौ १२,२४,२; ४; अअ २०, १३७.

कपोत[s,x]- पाउ १,६२; पाग ४,२, ९१; ५, ४, १३८; ६,४,१५३;

*a*) = वीणा-विशेष- । बस. । *b*) वैप १,१०८७ n द्र. । *c*) <√कम्प् । *d*) सकृत् पाभे. वैप १ शकुन्तक (खि २,२,५) टि. द्र. । *e*) °लः इति पाठः ? यनि. शोधः (तु. खि २,२,१) । *f*) = ऋषि-विशेष- । व्यु. ? । *g*) कु° इति [पक्षे] भाण्डा. । *h*) वैप ३ द्र. । *i*) अर्थः ? । *j*) तु. पागम. । *k*) = मणि-विशेष- । *l*) = देश-विशेष-? । *m*) विप., व्यप. (मुनि-, असुर-विशेष- [बौध.]) । वैप १,१०८७ o द्र. । *n*) विप. (वातप्रकृतिक-नर-) । बस. । *o*) कस. > द्वस. > षस. । *p*) = अङ्ग-विशेष- । व्यु. ? । *q*) = गो- । व्यु. ? । *r*) व्यप. । व्यु. ? । *s*) वैप १ द्र. । *t*) = अहीन-विशेष- । *u*) नाप. । व्यु. ? । पाप्र. तु कपि- + स्थल- इति । *v*) = चूडा- । व्यु. ? । *w*) ओषधीनां द्वस. इति सोमादित्यः । *x*) नाप., व्यप. (ऋषि-विशेष- [ऋअ. बृदे.]) ।

–तः आगृ ३, ७, ७[२]; शांगृ ५, ५, २†; आग्निगृ २, ५, २ : १; ३, ६, ३ : २१; २३; कागृ ५६, १†; बौगृ ३, ६, १; बौपि १, ११ : १८; १९; भागृ २, ३२ : १; मागृ २, १७, १[५]; हिगृ १, १७, ५†; जैगृ २,७ : २; कौसू ४६, ७†; अप १९, १, १०†; ६३, ४, ७; ६७, ३, १; ७०[३], ६, ९; २९, १†; शंध ३७८; काध २७६ : ५; ऋअ २, १०, १६५; बृदे ८, ६७; ६८; अअ ६,२७[२]†; –†तम् मागृ २,१७, १; कौसू ४६, ७; बृदे ८, ६८$; अअ ६, २८; –ताय शांश्रौ १२, १६, १†; –ते कागृ ५६, १; मागृ २,१७, १; –तौ बृदे ७,८७.

कापो( त> )ता[a]– -ता बौध ३,१,५.

कापोत-वृत्ति–नि(ष्ठा> )ष्ठ– -ष्ठस्य बौध ४,५,२८.

कापो( त> )ती[b]– -तीम् अप ७०[३],८,१.

कपोतकीय– पा ४,२,९१.

कापोतक– पा ६,४,१५३.

कपोत-पद-दर्शन– -ने आपगृ २३, ९.

कपोत-पाक– पाग ७,३,५३.

कपोत-पाद– पा ५,४,१३८.

कपोत-वत् बौध ३,२,१२.

कपोत-वृत्ति– -त्तिः विध ९४,११.

कपोत-वृत्तिक[c]– -काः वैध १,८,१.

कपोतो(त-उ)पहति– -तौ ऋअ २, १०,१६५.

कपोतो(त-उ)लूक– -काभ्याम् शांगृ ५,५,१.

कपोतोलूक-जन्या(न्य-अ)रिष्ट-क्षय[d]—काम– -मः अअ ६,२९.

१कपोल[e]– पाउ १,६६.

२कपोल[f]– -लाः[g] चव्यू २ : ३६.

कफ[h]– पाउभो २, २, २१८; –फम् वैश्रौ २१,२ : ५.

कफ-प्रकृति[i]– -तयः अप ६८, १, ४; २९; ३७.

कफस्[j]–> कफ(स्य> )स्या[k]– -स्याः[l] बौश्रौ २८,९ : १७; वैश्रौ २१,२ : ४.

कफेलू– पाउ १,९३.

√कब् पाधा. भ्वा. आत्म. वर्णे.

कबन्ध[e,m]– पाउभो २,२,१७४; पाग २,४,३१; –न्धः वाधूश्रौ ४,३७ : २१; २५; अप ५२,८,१; अअ ६,७५; –न्धम् अप ४८,७५†; ६७, ६, १; निघ १, १२†; या १०, ४†ф; ऋप्रा ४, ६१†; अप्रा ३, ४, १†; –न्धाः अप ५२,५,१; –न्धानि आपश्रौ १६, ८,१; हिश्रौ ११, २, १३; –न्धे अप ७२,१,५; ६,२.

कबन्ध-यान– -नानि अप ७०[३],११, २४.

कबन्धा(न्ध-आभा> )भ[i]– -भाः अप ५२,५,१.

कबर[n]– पाउ ४,१५५[o].

कबरी[p]– पा ४,१,४२.

कबर-पुच्छी– पावा ४,१,५५.

कबोध[q]– ( >काबोध– पा.) पाग ४,१,११२.

†कब्रु– -?ब्रु[०] अअ ११,३; दंवि २,४.

√कम्[r] पाधा. भ्वा. आत्म. कान्तौ, कामयते काश्रौ ३, ८, १६; आपश्रौ ××;२१,१२,४[s]; बौश्रौ; कामयति अप १, १३-१६, ३; कामयेते हिश्रौ ५, २, ६८; कामयन्ते आपश्रौ २३,१,८××; बौश्रौ; कामयसे अप ३६, २५, ३; कामये आपमं १, १३,४†; कामयावहे वाधूश्रौ ४, २ : ६; कामयामहे या २, ७; †कामयातै आपश्रौ ४,८, ५; भाश्रौ; कामयेताम् बौश्रौ १८, ३५ : ४; या ९, ४२; ४३; कामयन्ताम् या १२, ४६; अकामयत शांश्रौ १०, १४-१५, २××; बौश्रौ; अकामयेताम् बौश्रौ १८,३५ : १; अकामयन्त शांश्रौ १०, १८, २; बौश्रौ; कामयीत बौश्रौ २,१ : १; वैश्रौ २०,३४ : ९; आगृ १,७,३; २, ४,६; कामयेत आश्रौ ९,७,३५; शांश्रौ; कामयेत् आपश्रौ ८,१९, ६; हिश्रौ १७,२,६५; वाध १७, ३५†; कामयेयाताम् आपश्रौ ८,८, १७; भाश्रौ ८, १०, १५; कामयीरन् आश्रौ १२, ८, ३३;

*a*) =वृत्ति-विशेष-। ताद्धितः अण् प्र. स्त्री. च टाप् प्र. । *b*) विप. । अण् प्र. । *c*) =वानप्रस्थ-विशेष-। बस. । *d*) पंस.>कस.>षस. । *e*) वैप १ द्र. । *f*) =यजुःशाखा-विशेष-। व्यु. ? । *g*) =शाखा-ध्यायिन्-। *h*) =श्लेष्मन्-। वैप ३ द्र. । *i*) विप. । बस. । *j*) नाप. । व्यु.? । *k*) विप. (२अप्-) । *l*) सपा. आपश्रौ १०,१४,१ २कृ.पा– > -पाः इति पाभे. । *m*) =ऋषि-विशेष- [वाधूश्रौ. अअ.], असुर-विशेष- [अप.] । *n*) =केश-, चित्र-। व्यु. ? । *o*) <√कु । *p*) =केशवेश-। *q*) व्यप. । व्यु. ? । *r*) हिश्रौ ६,१,३ पा ३, १,३०; ८,३,४६;४,३४ पावा १,१,५ परामृष्टः द्र. । *s*) सपा. यत् कामयते<>यत्कामाः भवन्ति इति पाभे. ।

कामयेरन् बौश्रौ १४,२६ : १;
कामयेयम् सु २८,३.
चकमे वाधूश्रौ ४, १०८ : ४; ५; बृदे ६, ९९; या ११, ३४.
अचीकमेताम्, अचीकमन्त शांश्रौ ६, १,५; अचीकमथाः वाधूश्रौ ३,९२ : ८.

२कन्तु– पाउ १,२७;७३.

कमन[a]– -नः या १०, २२; –नेन या ४,१५.

कमनीय,या– -यः या २, २; –यम् या २, ३; ३, १८; –या या ४,१५.

कमनीय-देव– -वः या ५, २७.

कमनीय-भोज[b]– -जाः या २, २.

कमर– पाउ ३,१३२.

कमितृ– -ता पा ५,२,७४.

कम्र– पा ३,२,१६७.

कान्त– -न्तः या ५, ११; –न्ताः काठश्रौ ३३[c]; माश्रौ १, ७, ४, ११[c]; कौगृ २, ६, ९†[d]; अप ५२,१३,३; –न्तानाम् कौगृ १, ८,१०; –न्तानि या १०,२६[२]; १४,१९[२].

कान्त-क– -कानि या ५,११.

कान्ति– -न्तिः विध ९९, ४; या ५,१४;१५.

कान्ति-कर्मन्[e]– -र्मणः या ४, १५; ६,१०; ७,१२; १०, ३८; ११,५;१२,५; –र्मगः निघ २, ६; या ३,९.

कान्ति-हृत– -तः या ५,११.

१काम,मा[f]– पाग ६, १, १९९; पावाग ५, १, १११; –†०म आश्रौ ५,१३,१५; ८, १४, ४; आपश्रौ १४, ११, २[२]; काश्रौसं ४ : २; बौश्रौ १९, ७ : ५६; माश्रौ ५, २, १४, १३; हिश्रौ १०,६, ९[२]; जैश्रौ २० : १४; जैश्रौका २०१; वैताश्रौ ४, ५; द्राश्रौ ६,३,२७; लाश्रौ २, ११, २०; पागृ ३, १२, ९[४]; आग्निगृ २,७,५ : ५[३];६; बौगृ ३, ३,६; मागृ १,८,९; वैगृ ४,१ : १६[२]; ६,९ : ५[२]; गोगृ २, १,९; कौसू ४८,५; ९२,३०;३१; अप ३२, १,८; बौध २, १,३३[४]; ४, २, १०[४]; गौध २५,४[४]; अअ ९,२[२]; १९,५२; –मः †आश्रौ ५,१३, १५[३]; ८, १०,३; शांश्रौ ३, ५, ८†;४,७,१५[४]†××; या ५,२†; ६, ७; –मम्[g] आश्रौ २,२, ४†[h]××; शांश्रौ; काश्रौ २६,७, ४९†[i]; आपश्रौ ६,१, ८†[h]; माश्रौ १,६,१, ४†[h]; आपमं २, १५,१४†[h]; या १४,६; पाग १, १, ३७; –†मम्ऽ-मम् बौश्रौ १८, २९ : ७; ९; गो १, ८; –मस्य काश्रौसं ४ : ४†;९;५ : ७; वाधूश्रौ ४,९४[२]: ७; कौगृ २, २,१४: शांगृ २,४,२; आग्निगृ १, ५,१:९†;१०; बौगृ १,५,२९†; हिगृ १, २४, ४†; –मा मागृ २, १३,६†[j]; –माः आश्रौ ९, ८,२४; शांश्रौ १४,९,१२; काश्रौ ३,८,१†[k]; आपश्रौ ५,२९,४†; १०,६,५†××; माश्रौ १,८, ४, ३६†[k]; कौगृ ३,१५,४†[k]; शांगृ ३, १३,३†[k]; †मागृ[k] २,४,५;९, ४; †कौसू[k] ६,१;४५,११;१४; ८४,१; या ४,६;७,२†; –मात् काश्रौ ४,२,४६; पागृ २,७, २; १७, ३; कप्र ३,१, ८; वाध; –मान् आश्रौ ६, १२, ४; १०, ६, १; शांश्रौ ४, १८, २†; १०, २१, १४; १५, १, १२××; आपश्रौ ४, ६, २†[l]; हिश्रौ ६,२,१०†[l]; आपमं १,७, ११†[m]; या १,७;२०; ४, १६; –मानाम् आपश्रौ ४,१,२; बौश्रौ १, २१ : २४†; भाश्रौ ३, ११, १†; वैश्रौ ३,१:५; निसू; –माय आश्रौ १, ११, १××; शांश्रौ; काश्रौसं ४:२†[n]; बौपि ३,७,५[o]; –मायऽ-माय माश्रौ ५,२, १०, १३; बौध ३,८, ३५; –†मायै मागृ २,१३, ६; वागृ १४, १२; –मे बौश्रौ १,१२:२२†;२०,४: ४; द्रागृ २,५,१३; अप ४८,३†; ॰पा ५,२,६५; पावा ६,१,१४०; –मेऽ-मे बौश्रौ २३, १ : ३७; –मेन आश्रौ ५, १३, १५†[p]; †शांश्रौ २,१३,६; ४,१२, १०; आपश्रौ १४, ११, २†[p]; बौश्रौ १३,१:१३; हिश्रौ १०,६,९†[p]; कौगृ; या १२, १८†; –मेभ्यः आपश्रौ ४, ४,४†;६,६,४; २०,

a) भावे कर्तरि च कृत् । b) विप. । उस. । c) सप्र. कान्ताः <> जाराः इति पामे. । d) = वृक्ष-विशेष- । e) वि१. । बस. । f) वैप १ द्र. । g) क्वचित् वा. किवि. । h) सप्र. शांश्रौ २,६,७ लोकम् इति पामे. । i) पामे. वैप १,१०९० a द्र. । j) = काम-पत्नी- । k) पामे. वैप १,१०९० g द्र. । l) पामे. वैप १ भूतिकामान् काठ ३१,१४ टि. द्र. । m) पामे. वैप १,१०९० f द्र. । n) काय इति पाठः? यनि. शोधः (तु. सस्थ. अग्नये कामाय, संस्कर्ता च) । o) आयुष्मतीम् इति B. । p) पामे. वैप १,१०९१ a द्र. ।

१, ५; २२, ४; बौश्रौ; -मेषु माश्रौ ६,१, ३, २६; अशां १७, ३; -मैः निसू २,४ : ९; आपमं २,२०,२८†[a]; आग्निगृ १,५,२: ९;३,१,†२ : २; ७[a];××२,७: ५†[a];बौगृ; †भागृ[a] २,१५:१४; १६ : १४; १७ : ९; †हिगृ[a] २, ११, १†; १५,७; या १२,२१; -मौ आपश्रौ १७,२४,१०;२३, २,७; क्षुसू ३.१० : ५.

काम-काति[b]- -तयः आपमं २, ११,७†.

काम-काम- -माय वाध २३, ३†.

काम-कामिन्- -मी विध ७२,७.

काम-कार- -रेण विध ५,१०४.

कामकार-तस्(:) विध २८, ५३.

काम-काल-देश-दक्षिणा- -णानाम् आश्रौ ८,१३,३४.

काम-कृत- -ते आपध २,२८, १२; हिध २,६,१२.

काम-कॢप्ति- -प्तीः वैताश्रौ ४२, १३.

काम-क्रोध-द्रोह-लोभ-मोह- -हान् बौध २,३,२१.

काम-क्रोध-भय-लोभा (भ-आ) दि- -दिभिः विध ३,७४.

काम-क्रोध-लोभ-मोह-मद्- मात्सर्य-स्थान- -नम् विध ९६,५०.

काम-क्रोध-लोभा(भ-आख्या>) ख्य- -ख्यम् विध ३३,१.

काम-चार[c]- -रः बौश्रौ १५ ८ : ८; काध २७१ : ३.

काम-चार-वाद्-भक्ष- -क्षः गौध २,१.

काम-चारिन्- -री जैगृ २, ८ : २२; कप्र २,४,१७.

कामचारिणी- -णीम् शंध ३३४.

काम-जात- -तम् अप २०, ७, ११.

काम-ज(व>)वा[d]- -वाम् अप १,४९,१; १४,१,१६[2].

काम-तस्(:) शांगृ १,१,७; कप्र १,६,६; शंध १६१;४४९; विध २८, ४८; ५१, १८ ; बृदे ६, ५५.

काम-दर्शन- -नात् मीसू १२,४, १७.

काम-दायि (न्>) नी- -०नि अशां ५,७.

काम-दुघ्[e]- -दुघः[f] आपश्रौ ६, १,५; बौश्रौ २,७ : २८.

काम-दुघ,घा[b]- -†घः कौगृ ५, ७, २; आग्निगृ ३, ११, २ : ८; ३ : १६; -घम् अप १, ४६,३; ४७,१; -घा भागृ २,२ : ११†; -घाः आश्रौ ६,१२,४; †आपश्रौ १, १४, १२; ५, २६, ५; बौश्रौ २, ७ : २८; १८, ४७ : ११; १६; २४, ११ : १५†; †भाश्रौ १,११,१; ५, १८, १; वैश्रौ १, १९ : ७†; †हिश्रौ १,४,१०; ३,६,५; बौपि १, १५ : ७२†; -घाभिः बौश्रौ १८,४६ : १८; -†घाम् आपश्रौ ६,९,४[2]; हिश्रौ ३,७,६१[2]; -०घे आपश्रौ १६, १९,५†; बौश्रौ १०, २५ : ५†; माश्रौ ६,१, ६, ६; वाश्रौ २,१, ५,१६†; वैश्रौ १८, १६:१३†; हिश्रौ ११,६,३५.

काम-दुह्- -धुक् कौगृ ३, १२, २६.

काम-देव[g]- -०व विध ९८, १०.

१काम-देवता- > °त्य, त्या- -त्यम् अअ ९, २; -त्या अअ ३,२९.

२काम-देव(त>)ता[d]- -ता या ७, ४.

काम-द्वेष- -षः या १४,३.

†काम-धरण[b]- -णम् शांश्रौ २, १२, ४; बौश्रौ १०, २० : ६[2]; १९,२ : २३[2]; भाश्रौ ५,५, २; वाधूश्रौ ४,११४ : २; ३; हिश्रौ ३,३,२४; ११,५,२६.

काम-नियुक्त- -क्तानि बौश्रौ २४,१६ : ५.

काम-पति- -तिः शांश्रौ ४, १८,२†.

काम-पत्नी[h]- -त्नी मागृ २,१३, ६†.

काम-पाल[g]- -०ल विध ९८, ११.

१काम-प्र[b]- -प्रेण जैगृ १,२:१७; -प्रौ वैताश्रौ १२,१.

२काम-प्र[b]- -प्रम् कौसू ६६, ५; -प्राय शांश्रौ १७,१६,४†; -प्रेण बौश्रौ २६,१० : २५.

काम-प्र(द>)दा- -दाम् मागृ २,१३,६.

काम-प्रवेदन- -नम् पावा ३, ३,१५७; -ने पा ३,३,१५३.

a) पाभे. वैप १,१०९० g द्र. । b) वैप १ द्र. । c) वैप २,३खं. द्र. । d) विप. । बस. ।
e) विप. । उस. उप. √*दुघ् +क्विप् प्र. । भष्भावाऽभावश्च द्र. । f) सपा. मै १,८,६ कामदुघाः इति पाभे. ।
g) विष्णुनाम-विशेष । h) विप. ([देवी-विशेष-] षष्ठी-) ।

काम-प्रस्थ[a]– पाग ४,२,१३८; पा ६,२,८८.
कामप्रस्थीय– पा ४, २, १३८.
काम-बल– -ले पा ५,२,९८.
काम-भोग-परीत– -तस्य चाअ ३० : २६.
काम-भो(ग>)गा[b]– -गा आग्निगृ २,७,६ : १२.
काम-मन्यु– -न्युभ्याम् आपध १, २६, १३; हिध १,७, २४; -न्यू आपध १,२३, ५; हिध १,६,१३.
काम-मा(त्र>)त्रा– -त्राः वाश्रौ ३,४,४,२६.
काम-योग– -गः वैगृ ३,१ : ९.
काम-रूप– > °पिन्– -पिणे गौध २६,१२; -पी चव्यू ४ : १९.
काम-लिङ्ग[c]– -ङ्गेन आपध २, ४,१; हिध २,१,५४.
काम-लुब्ध– -ब्धः याशि २, ६२.
काम-वत्– -वान् या १०,४२.
कामवती– -त्यः काश्रौ १६, १,२७.
काम-वर्षिन्– -र्षी निसू ४, ३ : ७; गोगृ ३, २, २४; जैगृ १, १७ : ७.
काम-वादिन्– -दी बौध १, ५, ८६.
काम-विवेक– -कात् बौशु ७ : २१.
काम-शास्त्र– -स्त्रम् मीसू १०, ५,६६,

काम-शोचिन्– -चिभिः अप १, ३८,२†; अशां ८,२.
काम-श्रुति– -तिः मीसू २, २, २९.
काम-संयोग– -गः लाश्रौ ७, ११,२२; मीसू २,२,२८; -गात् मीसू १०, ५, ८१; -गे काश्रौ ४, १५, २६; मीसू ३, ६, ४३; ६, २, ७; १०, ५, ६५; -गेन मीसू ११,४,१०.
काम-सूक्त– -क्तम् अप १०, १, ७; ४६, ७, ४; ५; अपं ४ : २४†; -क्तेन अप्राय २, ५; अप २०,५,५; ३९,१,९.
कामसूक्ता(क्त-आ)दि– -दयः अप २०,४,१.
काम-हत– -तः आपश्रौ २२, ६,८; हिश्रौ १७,२,५३.
कामा(म-आ)गान– -नम् निसू २,४ : १९
कामा(म-अ)ज्ञान– -नात् मीसू १०,२,४९.
कामा(म-आ)तु(र>)रा– -रा याशि २,६७.
कामा(म-आ)त्मन्-चेतस– -तसा अअ ६,९.
कामात्म-दैव(त>)ता– -ते अअ ६,९.
कामा(म-आ)नन्त्य– -न्त्यात् वैताश्रौ ४३,४३.
कामा(म-अ)भिधान– -ने पावा ५,२,६५.
कामा(म-अ)र्थ– पा,पाग २,२, ३१.
कामा(म-अ)वधारण– -णानि

निसू ३,३ : ४०.
कामि(क>)का[d]– -काम् अप ७०[3],८,२.
कामे(म-ई)प्सु[e]– -प्सोः चाअ १९ : २६.
कामे(म-इ)षु-देवताक[f]– -कम् अअ ३,२५.
कामे(म-इ)ष्टि– -ष्टौ मीसू १०, २,४२.
कामो(म-उ)दक– -कानि पागृ ३,१०,४६.
१काम्य– पावा ५,१,१११.
कामन[g]– -नम् आपश्रौ ४, १, २; वैश्रौ ३,१ : ५.
कामयत्– -यन्तः या ६, २६.
कामयमान,ना– -नः बौश्रौ १४, २५ : ११; २०; माश्रौ ३, ८, १†[h]; वाध; -नस्य शांश्रौ १४, ३१, १; शौच ४, १०२; -ना बौश्रौ १८, ४४ : २; १०; या १, १९; ३, ५; -नाः †कौसू ९२, ३०; ३१; १९, ५२; या ५,१८××; -नान् या ६,१३; -नानि या १४,१५; -ने या ९, ३९; -नेषु बौश्रौ १४, २६ : १.
कामयाम् √अस्(भुवि), कामयामास बृदे ६,७६.
कामयित्वा वैताश्रौ ३४,२.
कामि– पाउभो २,१,१६६.
कामि(न्>)नी– >°नी-मनो(नस्-अ)भिमुखीकरण– -काम– -मः अअ २,३०.
कामुक,का– पा ३,२,१५४; पाग ४, १, ९९[i]; -काः दाधूश्रौ ४, ४७ : ९.

---

*a*) =देश-विशेष-। *b*) विप.। बस.। *c*) =मन्त्र-विशेष-। *d*) विप. (दक्षिणा-)। मत्वर्थे ठन् प्र.। *e*) विप.। षस.। *f*) विप.। बस.>बस.। *g*) =कामना-। भाप.। *h*) पामे. वैप १,११७३ l द्र.। *i*) व्यप.। धा. अर्थः ?।

कामुकी– पा ४,१,४२.

कामुकायन– पा ४,१,९९; –नः मीसू ११,१,५७;६२.

२काम्य,म्या[a]– -म्यः आपश्रौ १२, ७,८; माश्रौ ५,१,१,३५; हिश्रौ १७,६, ४५; वैताश्रौ; –म्यम् आश्रौ ८,१०,१; शांश्रौ २,५,१; १२, २०,२†; आपश्रौ; –म्यस्य बौश्रौ २२,३:८; निसू २,८ : ६; –म्या आपश्रौ २०,१६,२; बौश्रौ १५, २४ : ४; वाश्रौ; –म्याः आश्रौ २,१०,१; शांश्रौ ६,१, २०; आपश्रौ ४, १३, २××; बौश्रौ; –†०म्याः काश्रौ ४,१२, ९; शांश्रौ २,१२, ४; –म्यान् बौश्रौ २४, ३८ : १; हिश्रौ; –म्यानाम् माश्रौ ५,२, ७, १; द्राश्रौ; –म्यानि शांश्रौ ३,१९,५; आपश्रौ १०, २०, ५; ११, १०, १२; १२, १४, ४; भाश्रौ; या ११, ३६†§; –म्याभिः आपश्रौ १९,१८,१; हिश्रौ २२, २, १; –म्यासु शांश्रौ १, १६, २१; –म्ये हिश्रौ ८,२,५; ४, ५××; आगृ; –†०म्ये द्राश्रौ ९,२,३; लाश्रौ ३,६,३; –म्येषु गोगृ ४, ५, १; ७: ९; द्रागृ १, २, २३; ४, १, १; अप; –म्यैः आपश्रौ १९, १६, १; हिश्रौ २२,१,१; लाश्रौ ७, १३, ८; कप्र १,६,१२; –म्यौ आपश्रौ १२,७,८; वैताश्रौ ४३,३४.

काम्य-त्व– -त्वात् मीसू ५,३, ३४: ६,१,३१.

काम्य-देवता– -ता काश्रौ ४, ५, १.

काम्य-नित्य-समुच्चय– -यः मीसू १२, ४,१७.

काम्य-नैमित्तिका(क-आ)दि– -दिपु शुअ ४,१२७.

काम्य-युक्त– -क्तम् मीसू ३, २, १९.

काम्य-वत् भाश्रौ ३,१३,१०.

काम्य-सामान्य– -न्ये कप्र २, ४,६.

काम्य-होम– -माः कौसू ५,४.

काम्य(म्य-आ)म्रेडित– -तयोः शौच ४,३०.

?काम्यमा(न>)ना– -नाः वाधूश्रौ ३,९२ : ४[b].

†चकमान– -नः अप ४८,३; निघ २,६[c]; –नाय बौगृ २, १,१४; अअ १९,५२.

†कम्[a] आश्रौ ५, २०, ६××; शांश्रौ; या १,९$; १०; ७,२५.

कमक[d]– पाग २,४,६९.

कामकायन–>°यनिन्[e]– -निनः बौश्रौप्र ३३ : १.

कमठ[f]– पाउ १,१००.

कमण्डलु[,लू][f,g]– पाउभो २,१,१०६; पा ४,१,७१; ७२[h]; पाग २,४, ३१; ५,१,१३०[h]; –लुः वाधूश्रौ ३, ७६ : ३५; वागृ; –लुना आपश्रौ २०, २२, १; काठश्रौ; –लुभिः बौश्रौ २०, २७ : २०; २१, १४ : २१; –लुम् बौश्रौ १५, १५ : ७××; कौगृ; –लून् बौश्रौ १५, १५ : १३; वाधूश्रौ ३,७६ : २४; –लौ वाधूश्रौ ३, ९६ : ४; बौध १, ४,६.

कामण्डलव– पा ५, १,१३०.

कामण्डलेय[i]– (>°लेयी– पा.) पाग ४,१,७३.

कमण्डलु-कपाल– -ले अप ४०,६,५

कमण्डलु-ग(त>)ता– -ताभिः वौश्रौ २०,४ : ७.

कमण्डलु-चर्या– -र्याम् बौध १, ४, १.

कमण्डलु[j]-पद– -दे आपश्रौ ५,१५, १; भाश्रौ ५, ८, १६; वैश्रौ १, १३ : ३.

कमण्डलु-मृद्ग्रह(ण>)णी– -ण्यौ वैध २,३,३; ८,१.

कमण्डल(लु-उ)दक– -केन बौध १,४,१४†.

कमण्डल्व(लु-अ)धारण– -णे बौगृ ४,११,१.

कमथ[k] अप ४८,११६†.

कमन–, कमनीय– √कम द्र.

कमन्त[,न्द]क[d]–(<> कामन्त-[,न्द]कि– पा.)पाग २,४,६९.

कमर– √कम द्र.

१कमल[l]– पाउभो २, ३, ९३; पाग २, १, ५६; ४, १, ४५; ५, २, १३५; –लैः अप १,४३,८.

कमला–,कमली– पा ४,१,४५.

कमल-गर्भा(र्भ-आभा>)भ– -भाः अप ५२,३,१.

कमलि(न्>)नी– पा ५,२,१३५.

२कमल[d]–पाग ४,३,१०६[m].

कामलि–(>°लायन– पा.) पाग २,४,६१.

---

*a*) वैप १ द्र. । *b*) पाठः? कामयमानाः इति शोधः । *c*) <√चक् इति दे. । *d*) व्यप. । व्यु.? । °न्तक– इति भाण्डा. । *e*) प्रोक्तार्थे इनिः प्र. उसं. (पा ४,३,१०६) । *f*) वैप ३ द्र. । *g*) =पात्र-विशेष- । *h*) व्यप. । *i*) अपत्ये ढञ् प्र. उकारलोपश्च (पा ४, १, १३५, ६, ४,१४७) । *j*) =पशु-विशेष- । *k*) अर्थः व्यु. च? । *l*) वैप १, १०९३ l द्र. । *m*) तु. पागम. ।

कामलिन्- पा ४,३,१०६.
**कमलकीकर-** (>काम°) कमल-कीट- द्र.
**कमलकीट[,र]**[a,b]- (>काम° पा.) पाग ४,२,११०.
**कमल-भिदा**[a]- (>कामलभिद- पा.) पाग ४,२,११०.
**कमितृ-** √कम् द्र.
**कमुजा**[c]- -जा काग्टउ ४४ : १९.
**√कम्प्**[d] पाधा. भ्वा. आत्म. चलने, कम्पते अप ५०,९,२; ७०[3],११, २३; निघ २.१२†; कम्पन्ते अप ५७, १-४, २; कम्पन्ति अप ६४,७,६.
कम्प्येते शैशि १२०.
कम्पयन्ति अप ६४, १, ५; कम्पयेत् अप ६४, १,१०; ६८, २,६; शंध.
**कम्प-** -म्पः अप ६४,२,२;३,९;उस् ; -म्पम् उस् ८, २२××; शैशि; -म्पाः शैशि २००; कौशि २१; -म्पात् अप ६४,१,८; -म्पानाम् अप ६२,२,७; ६४, १,६; -म्पे अप ६४, १,७;२,४; -म्पेषु अप ६२, ४, ६; कौशि १८; -म्पैः आज्यो ११, १; -म्पौ अप ६४, २,५[2].
कम्प-प्रहास- -साः अप ६४, ६,४.
कम्प-विधि- -धिः शैशि १४५; १५२.
कम्प-संधि-स्वरा (र-आ) दि- -दयः कौशि ५६.
कम्प-स्थान- -ने शैशि २४१.
कम्पा(म्प-अ)र्थ- -र्थः शैशि १४३.
कम्पो(म्प-उ)त्स्वरिता(त-अ) भिगीत- -तम् नाशि २,३,७.
कम्पन[e]- पाग ४, ४, ५९[f]; -नम् काश्रौ ९,१३,३५; अप ६४, ४, १०; भास् १, २०; -नाः या ६, ४; -ने अप ७१,२,२.
काम्पनिक-, काम्पनीक- पा ४, ४,५९.
कम्पयत्- -यन् सु १४, २; बृदे २, ६७.
कम्पित- -तः नाशि १,४,८; -तम् माशि ५,२; -ताः अप ४७, ३, ५; -तान् माशि ५,२.
कम्प्र- पा ३,२,१६७; -म्राभ्याम् काश्रौ २२,४,१७.
कम्प्र-मिश्र- -श्राभ्याम् लाश्रौ ८,६,१०.
**कम्पिल**[g]- पाग ४,२,८०.
काम्पिल्य[h]- पा ४, २,८०; -ल्यः फि ६२.
**कम्ब-** २क- द्र.
**कम्बल**[i]- पाउ १, १०७; -लः जैश्रौका १९५; आपध १,३, ८; हिध १, १,८०; कप्र ३, ८, ११?[j]; या २,२🙰; -लम् अप १, ५०, १; अशां १३, ३; दंवि २,२†; -ला: बौश्रौ २६,३२ : २८; -लानि हिगृ १,२२,१४†; -ले अप्रा ३, ४,१†; -लेन अप ३३,६,५.
कम्बल-भा[,हा]र[k]- पाग २,४,६३.
कम्बल-भोज- -जाः या २, २.
कम्बला(ल-ऋ)र्ण- पावा ६, १, ८८.
कम्बल्य- पा ५,१,३.
**कम्बलिक[,का]**[g]- (>काम्बलिकायन[h]- पा.) पाग ४,२,८०.
**कम्बु**[l]- पाउभो २,१,८५[m].
कम्बु-क(ण्ठ>)ण्ठी- -ण्ठीम् विध १,२३.
कम्बु-शूर्प- -र्पे भाश्रौ ९, १६, १७.
**कम्बू-** पाउ १, ९३.
**कम्बूक**[i]- -काः अशां १५, ५; -कान् गोगृ ४,९,१४; द्राग्र ४, ३, ६; कौसू ६३,७†; अप्रा ३, ४,१†; दंवि २,४†.
कम्बूक-पिण्डक- -कः अप १, ३४,३.
कम्बूका(क-आ)हुति- -तिम् अशां १५,५.
**कम्बोज**[n]- पाग ४,१,१७५;२,१३३; १३४;३,९३; -जाः, -जेषु या २, २🙰.
काम्बोज- पा ४, २,१३३; ३, ९३; -जाः अप १,७,१०.
काम्बोज-मुण्ड- पाग २, १, ७२.
काम्बोज-वाल्हिक- -काः अप ५७, २,५.
काम्बोजक- पा ४,२,१३४.
**कम्भ-** २क- द्र.
**कम्र-** √कम् द्र.

---

*a*) =ग्राम-विशेष-। व्यु. ?। *b*) कललकीट-, कललकीकटा- इति [पत्ते] पाका.। °कीकर- इति भाण्डा. पासि.। *c*) =चूडा-। *d*) पा ३,२,१६७ पावा ६,४,२४ परामृष्टः द्र.। *e*) भाप., नाप. (कृमि-विशेष- [या.])। *f*) तु. पागम.। अर्थः?। *g*) अर्थः व्यु. च ?। *h*) =देश-विशेष- ?। *i*) वैप १ द्र.। *j*) =मृग-विशेष-। त° इति पाठः ? यनि. शोधः। *k*) व्यप.। *l*) =शङ्ख-। व्यु. ?। *m*) <√कम् इति। *n*) =जनपद-विशेष-, तद्राज- प्रभृ.। व्यु. ?।

**कयाधु**[a]– >**कायाधव**[a]– -वः माशि ५२†.
**कयाशुभीय**– प्रमृ. किम्– द्र.
**१कर**[b]– -रैः अप ७०[3], ११,१३.
करिन्– > करि-प[c]– पाग ६, २, १३४.
करि-पथ– पा, पाग ५,३,१००.
**२कर**– √कृ द्र.
**३कर**– √कॄ (विक्षेपे) द्र.
**करक,का**[d]– पाउ ५, ३५, पावाग ७, ३,४५; –कम् वैगृ १,६ : २[e].
**करङ्क**– पाउभो २,२,३.
**करा,ला।ञ्ज**[f]– पाउभो २,२,९०;–ञ्जम् वैध२,१५,५;–ञ्जस्य माशि ४,१
करा,ला।ञ्ज-पलाण्डु-पारारिका– काः आपध १, १७,२६; हिध १,५, ५८.
करञ्जा(ञ्ज-आ)म्रा(म्र-आ)सवर्ण– -र्णाः कौगृ २,६,९.
**करट**[g]– (> °टिक– पा.) पाउ ४, ८१; पाग ४,४,१६[h].
**१करण**– ( > कारणिक– पा. ) पाग ४,२,११६[h].
**२करण–,करणि–,°णी**– प्रमृ. √कृ द्र.
**करण्ड**– पाउ १,१२९.
**करत्–,°न्ती**– √कृ द्र.
**१करभ**– पाउ ३,१२२; पाग ५, ४, ३[h]; –भे पा,पावा ५,२,७९.
करभ-क– पा ५,४,३.
करभ-रासभ– पाग २,२,३१[h].
**२करभ**[i]– -भाः बौश्रौप्र ३५ : १.
**करभूर**– पाउभो २,३,५९.
**करम्ब**– पाउ ४,८२.
**करम्भ**[j]– पाउभो २, २, २३२; –म्भः आश्रौ १२, ८, ३३; आपश्रौ १२, ४, १३†; काठश्रौ ११३; वैश्रौ १५, ५ : ३; हिश्रौ ८, १, ५६; १२,६, ६†; वैताश्रौ १६, १७; कौसू १३८, २; –म्भम् काश्रौ ९, १, १५; †आपश्रौ ८, १५,१७; १२, ४, ६; बौश्रौ ५, १२ : १८; २०; १३ : १३: १४ : २८; १५ : ३†; ७,१२ : ४; २५, ३ : १४; २० : ४; २८,४ : ३; वैश्रौ ९, ६ : ७;९; १५, ४ : ५: हिश्रौ ८, १, ५०; अप्रा ३, ४,१†; –म्भस्य बौश्रौ ५, १४ : २; ७; १२; १३; ७, १२ : ९; वैश्रौ १५, २५ : २; –म्भात् माश्रौ २, ४, ६, २६†; –म्भान् आपश्रौ २०, १०, ५; बौश्रौ २८, ४ : ४; हिश्रौ १४, ३, ३; बौगृ ३, १०, ४; –म्भाय माश्रौ २, ३,२, २; ७, ८; –म्भेण बौश्रौ ५,७: १३†.
करम्भ-चर्मन्– -र्माणि बौश्रौ १५, १६ : ४.
करम्भ-पात्र– -त्राणि काश्रौ ५, ५, १०; आपश्रौ; –त्रेभ्यः भाश्रौ ८,५, ९; –त्रेषु आपश्रौ ८,६, १४; माश्रौ ८, ७,१०; वैश्रौ ८, ११ : ४; हिश्रौ ५, २,४३; –त्रैः आपश्रौ २२,८,१२.
करम्भपात्र-करण– -णम् काश्रौ ५,३,२.
करम्भपात्रा( त्र-अ )र्थ– -र्थान् आपश्रौ ८,५,३७.
†**करम्भिन्**– -म्भिणम् आश्रौ ५, ४,२; गोगृ ३,३,६.
**करवाल**– पाउभो २, ३, १०५.
**करवीर**[k]– पाउभो २,३,५०; पाग ४, २, ८०; –रस्य माशि ४,२.
कारवीरेय– पा ४, २,८०[1].
करवीर-करञ्ज– -ञ्जयोः नाशि २, ८,४.
करवीर-करञ्जक– -कौ याशि १, ३६.
करवीर-शङ्खपुष्पो(ष्प-उ)त्पल-नन्द्या-वर्त-चम्पक-मल्लिका(का-अ)सित-गिरिकर्णिका-कल्हार-तापिच्छ-पुष्प– -ष्पैः वैगृ ४, १३ : १२.
**करशिखण्ड**[l]– -ण्डानाम् बौश्रौप्र २६ : २.
**करस्**– √कृ द्र.
**करस्कर**[m]– पाग ६,१,१५३[n]; –रान् बौश्रौ १८,१३ : १[o]; –राभ्याम् बौगृ २,८,३०[p].
करस्करा(र-अ)वकाश– -शे बौगृ २,८,३०.
**करस्न**[j]– -स्नान् शांश्रौ १८, २४, ३; –स्नौ निघ २, ४†; या ६, १७∯.
†**करस्यु**[q]– -स्युः द्राश्रौ ११, १, ५; लाश्रौ ४,१,५.
**कराल**[r]– पाउभो २, ३,१००; –लः शैशि १६०; पाशि २७; माशि १५, २; याशि १, २६; नाशि २, ८, १२; –लाय †अप ३६, ९,४; ६६, ३,२.

---

*a*) वैप २,३खं. द्र. । *b*) =शुण्डा-दण्ड- । *c*) =हस्तिप- । *d*) बप्रा. । व्यु. ? । *e*) =कमण्डलु- ⌊जल-पात्र-⌋। *f*) = वृक्ष-विशेष-, रक्त-लशुन- । व्यु.? । °ल° इति वैध. हिध. । *g*) अर्थः व्यु. च? । *h*) तु. पागम. । *i*) = ऋषि-विशेष-। व्यु.? । *j*) वैप १ द्र. । *k*) = वृक्ष-विशेष- । व्यु. ? । कर-वी° इति Mw. । *l*) =देश-विशेष-? । *m*) व्यु.? । *n*) तु. पागम. । **कारस्कर**– इति भाण्डा. । = वृक्ष- वा गिरि- वा । *o*) = जनपद-विशेष- । *p*) = अगारैकदेश-, तदधिष्ठित- देवता-विशेष- । *q*) विप. (वाण- ⌊वीणा-⌋) । व्यु. ? । *r*) वैप ३ द्र. ।

जागर्या- पावा ३,३,१०१.
जागृत- -तम् अप ४८,८०[a].
†जागृवस्[b]- -वद्भिः आश्रौ ४,१३, ७; १५,८; ऋअ २,१०,९१.
जागृवि[b]- पाउ ४, ५४; पावा ६, १,६६; -†वि आपश्रौ १२, ८, ३; ११, ११; बौश्रौ; -†विः आपश्रौ १४, १२, १; बौश्रौ २, १४ : १८; हिश्रौ; या ९,८[2].
जाग्रत्- -ग्रत् काश्रौ ९, १, १३; माश्रौ २,२,५,३; अअ १६,७†; -ग्रतः वैताश्रौ ५, ८; आग्निगृ ३, १२, २ : १०; अप; -ग्रतम् काश्रौ २५,३,११.
जाग्रद्-दुष्वप्न्य[b]- -प्न्यम् अअ १६,६†.
जाग्रत्-मिश्र- -श्रौ गोगृ १,६,६.
√गृ, गॄ[c] पाधा. क्र्या. पर. शब्दे, गृणाति निघ ३, १४†; या ४, २४; †गृणन्ति अप १,३७,४; अशां ७,४; गृणीषे या १०,४४†; †गृणे आश्रौ ६, २,६; ८, १२, २४; ९,५,५; शांश्रौ ९, ६, ६; १४, ३, १२; साअ १, ३९१; †गृणामि या ५,९ϕ; गृणीमसि आश्रौ ७, ८, २; क्षुसू १, ६ : १५;२३; † वैताश्रौ ३९,२;४१, १; ५.
गरितृ- -ता या १, ७.
गरूथ[d]- -थम् या ६,१७.
गिर्[b]- पाउभो २, १, ३०३; †गिरः आश्रौ २, ८, ३××; शांश्रौ; या १, १०[3]; ५, १७; १०, ६; १२, ३६; पावा ८, २, २२; गिरम् वाध २८, ६; बौध २, २,५८; †गिरा आश्रौ ६,४, १०; ८, १२, २४; ९, ५, ५; शांश्रौ; या ६,२४ϕ[e]; १०,५ϕ; †गिराऽगिरा आपश्रौ १७, ९, १; वैश्रौ १९, ६ : १; गिरि शांश्रौ ८, २५, १†[f]; गिरौ पावा ८, २, २२; †गीः बौश्रौ ५, ८ : २; वाधूश्रौ ४, ११५ : १५$; वैताश्रौ ३४, ९; अप्राय ६, ९; अप ४८, १०२; निघ १, ११; ऋप्रा ७, २६; †गीर्भिः आश्रौ १, ५, ३५; ६, १[g]××; ३, ७, १३[g]; शांश्रौ; या ६,१४; १४,३२.
गिरा- पाग ४,१,४[h].
†गिर्-वणस्[b]- -०णः आश्रौ ४, ६,३; ९, ६; ६, १, २[2]; शांश्रौ ५, ९, १२; १३, १०; आपश्रौ ११,८,४; बौश्रौ ६, २७ : २१; माश्रौ २,२,३,२६; ४, २, २८; वैश्रौ १४, ६ : १४; हिश्रौ ७, ५, २९; ७, २१; वैताश्रौ ३९, ७; ४०, ४; आपमं १,२,६†; आग्निगृ १, २, ३ : ८; साअ १, १९५; शुप्रा २,१०; शैशि २३६; नाशि २, १, ९; -णसे या ६, १४†; -णाः अप ४८, ११५; निघ ४,३; या ६,१४ϕ.
गीः-पति[i]-, गीः-पुत्र-, गीर्-पति-, गीर्-पुत्र- पावा ८, २, ७०.
गृणत्- -†णते आश्रौ २,१६,११; ७, ११, ७; शांश्रौ ९, १६, ३; आपश्रौ १३, १८, १; माश्रौ २, ५,४,१२; पागृ ३,५,३; -णन् बृदे ४, ७८; -†णन्तः आश्रौ २,८,१४; ९,९,७.
गृणाति- >°ति-कर्मन्- -र्मा या ६,८.
गृणात्य(ति-अ)र्थ- -र्थे या ९, ४; १०,२३.
†गृणान,ना- -नः आश्रौ १, २,७; शांश्रौ १४,११, ९; काश्रौ २५, ११, ३४; बौश्रौ १३, २७ : ८; निसू २, १३ : ३०; आपमं २, २, १[j]; आग्निगृ १, १, २ : ४[j]; बौगृ २,५, ९[j]; भागृ १,५ : ९[j]; हिगृ १, ३, ५[j]; अप्राय २, ७; अप ४६, ३, ५; ऋप्रा ७, २६; -ना आश्रौ ५, ५, १२; शांश्रौ ७,२,७; आपश्रौ १६, २९, २; वैश्रौ १८,२० : २८; हिश्रौ ११, ८,४; आगृ ३, ५, ७; कौगृ ३, ७, १०; शांगृ ४,५,८; या ११, ४९; -नाः[k] आग्निगृ ३, ७, १ : ८; वौपि १,१७ : ८.
√गृञ्ज्, ञ्ज् पाधा. भ्वा. पर. शब्दे.
गृञ्ज[l]- > गृञ्ज-क- -कम् वैध ३, ५,८[m].
गृञ्जन[n]- पाउभो २, २, १९२; -नम् वैध २,१५,५.

---

a) =उदर-। धा. अर्थः?। b) वैप १ द्र.। c) या १,१०;२,२८; ३,५[2]; ६,१७;९,५;८ परामृष्टः द्र.। d) =स्तोत्र-। ऊथन् प्र. उसं. (पाउ २,६ ⌊तु. स्क.⌋)। e) पाभे. वैप १,१२३२ g द्र.। f) 'अस्य (सोमस्य) मदे (मदाय) गिरि (स्तुतौ सत्यां ⌊तत् कालमेव⌋) इन्द्रः ϕउपस्थात् (उपतिष्ठेत)' इति वा. द्र. (वैतु. ? C. गिरि-ष्ठाः इति)। g) पाभे. वैप १, १२३३ e द्र.। h) तु. पागम.। i) गीष्पति- इति केचित् (तु. पागम.)। j) पाभे. वैप १,१३८४ i द्र.। k) पाभे. वैप १ वृणानाः ऋ १०, १८,६ टि. द्र.। l) =गृञ्जन-। व्यु.?। m) ग्रजकलिम् इति C., गृञ्जक- इति मूको.। n) =कन्द-विशेष-। व्यु.?।

**गृणत्–**, प्रमृ. √गृ (शब्दे) द्र.

**गृत्स**[a]– पाउ ३,६९; –त्सः अप ४८, ८५†[b]; निघ ३, १५†[b]; या ९,५∅.

**गृत्स-मद**[a]– -दः आगृ ३,४, २; कौगृ २,५,१; शांगृ ४, १०, ३; अप ४३, ४, ३†; ऋअ २, २, १; ९, ८६; बृदे २, ५५××; शुअ; अअ २०,२०; ३४?[c]; या ९, ५∅; –दम् बृदे ४, ७०; या ९,४; –दस्य चाअ १६ : २; –दाः बृदे ४, ९८; –दे बृदे २, १५५; ३,१२८; –देन बृदे ३, २७.

**गार्त्समद**[d]– -०द आश्रौ १२, १०, १३[२?e]; आपश्रौ २४, ६, ४; बौश्रौप्र ९ : ४; हिश्रौ २१, ३,७; वैध ४, २, ८; –दः शांश्रौ १०, ३, ४; ऋअ २, २, २७; बृदे ४, ७८∅; शुअ ३, २११; ४, ३६; –दम् आश्रौ ७, ६, ३; ८, ८, ८; या ८, २२; –दाः आपश्रौ २४, ६, ३; बौश्रौप्र ९ : १; हिश्रौ २१,३,७; –दानाम् शांश्रौ ११, १०,५; वैध ४, २, ८; –दानि शांश्रौ ११, १०, ४; –दे शांश्रौ ११,७,३; बृदे ३,३६.

**गृत्समद-वत्** आपश्रौ २४,६,४; बौश्रौप्र ९ : ४; हिश्रौ २१, ३, ७; वैध ४,२,८.

**गृत्स-मदन**– -नः या ९,५.

**†गृद**[a]– -दम्[f] आपश्रौ २०, १८, ४; हिश्रौ १४,४,१०.

**√गृध्**[g], पाधा. दिवा. पर. अभिकांक्षायाम्, जागृधुः ऋप्रा ९, ५२†.

**गर्ध**– (>गर्धित– पा.) पाग ५, २,३६.

**गर्धन**– पा ३,२,१५०.

**गृधु**– पाउ १,२३.

**गृध्न**[h]– -ध्नः शंध २४३[i].

**गृध्नु**– पा ३, २, १४०; –ध्नुः आश्रौ ६,३,१†.

**गृध्नु-परिवार**[j]– -रः शंध २४३[२k].

**?गृध्य**[a]– -ध्यैः अअ १२,२†.

**गृध्र**[a]– पाउ २, २४; –ध्रः आपश्रौ १५,१९,४; बौश्रौ ९,१८ : ११; भाश्रौ; वाध १६,२३[i]; या १४, १३; –ध्राः †अप १,३६,५;१[२], १, ७; ५१, ७××; –ध्राणाम् अप ७०[३], ११,२६; विध ४८, ६†; या १४,१३∅; –ध्राणि या १४,१३.

**गृध्र-गोमायु-वायस**– -सैः अप ६१, १,११.

**गृध्र-परिवार**[j]– -रम् वाध १६,२१; २२;२३[२k].

**गृध्र-श्येना(न–आ)रोहण**– -णे काध २७६ : ७.

**गृध्र-सङ्घ**– -ङ्घैः अप ७०[३],११,२९.

**√गृभ्, ह्, ग्रभ्, ह्**[l] पाधा. भ्वा. चुरा. आत्म. ग्रहणे; क्र्या. उभ. उपादाने, **गृह्णेत्** कौसू ८२,२१. **†गृभ्णामि** आपमं १,३,३[m];१५, ४[n]; आगृ १, ७, ३[m]; कौगृ १,८, १७[m]; शांगृ १, १३,२[m]; पागृ; **ग्रभत्** आश्रौ ६, ५, १८†[o]; **ग्रभः** शांश्रौ ९, २०, २६†[o]; **गृभ्णातु** वाश्रौ २,१,१, ३८†[p]; **†गृभाय** शांगृ १,१९, ६[q]; ऋप्रा ८, २; **†अगृभ्णत** या ७,२६∅[r]; **†अगृभ्णन्** आपश्रौ १६,२, १; २०, ३, ३; बौश्रौ; **?अगृभ्णाम्** शैशि ६६.

**जग्र(भ>)भा** ऋप्रा ८, ३३†; **†जगृभ्म > भ्मा** ऋअ २, १०, ४७[s]; बृदे ७, ५६[s]; ऋप्रा ७, ३३[s]; शैशि ६६†; पा ७, २, ६४†; **†अग्रभीत्** आश्रौ ३,४, १५; शांश्रौ; †आपमं २,३,३[t]; ५[u]; ८[t]; आगृ १,२०,५[u]; कौगृ २,२,११[५t,u]; शांगृ २,३,१[४t,u]; भागृ १, ७ : १०[u]; वैगृ २, ६ : ३[u]; हिगृ १, ५,९[२t,u]; †जैगृ १, १२ : २८[४u]; २९[t]; **अग्रभीष्टाम्** माश्रौ ५,२,९, ६; **अग्रभीषुः** शांश्रौ ६, १,५; माश्रौ ५, २,९,६; **†अग्रभीष्ट** कौसू ७१,

---

*a*) वैप १ द्र.। *b*) मेधावि-नामन्-। *c*) °दा इति पाठः? यनि. शोधः। *d*) तस्यापत्यीयस् तेनदृष्टीयो वा **अण्** प्र.। *e*) सकृत् **गृत्स°** इति पाठः? यनि. शोधः। *f*) पाभे. वैप १,१२२५ l द्र.। *g*) या १४,१३ पा १,३,६९ परामृष्टः द्र.। *h*) विप.। **न** (क्) प्र. उसं. (पाउ ३,१२)। *i*) सप्र. **गृध्नः**<>**गृध्रः** इति पाभे.। *j*) विप.। बस.। *k*) सप्र. **गृध्नुपरिवारः**<>**गृध्रपरिवारम्** इति पाभे.। *l*) या २,२८;५,१५;९, ८;१०,२३ पावा ८,२,३२ परामृष्टः द्र.। *m*) पाभे. वैप १,१२३६ f द्र.। *n*) पाभे. वैप १, १२३६ g द्र.। *o*) पाभे. वैप २,३ खं. **ग्रभत्** ऐब्रा ४,१० टि. द्र.। *p*) पाभे. वैप १,१२३६ j द्र.। *q*) सप्र. **पतिरेतो गृभाय** <>**प्रति रेतो गृहाण** इति पाभे.। *r*) पाभे. वैप १,१२३६ m द्र.। *s*) पाभे. वैप १, १२३६ q द्र.। *t*) पाभे. वैप २,३खं. **अग्रहीत्** मंब्रा १,६,१५ टि. द्र.। *u*) पाभे. वैप १,१२३८ h द्र.।

६; †अग्रभैषम्[a] बौश्रौ १७, ४१:१६; आपमं २, ८ ३; मागृ २, २१ १७; अग्रभिषम् हिगृ १, १०, ६†[a]; अग्रभम् अग्र १९, २८†; †अग्रहम् आग्निगृ १,३, ४:२[a];१०.

जग्रभम् पागृ १,१३,१†[a].

गृह्णीते आपश्रौ १६, २१, ८; बौश्रौ १, १२ : ५०; ५२; ५४; ५५××; माश्रौ; गृह्णाति शांश्रौ ३, १७, ८××; काश्रौ; आपश्रौ १८, २,१[b]; हिश्रौ ८, २,२२[c]; आग्निगृ१,१,३:६?[d];हिगृ१,५,६; या १०, २३; गृह्णाते माश्रौ ५, ४, ११; गृह्णीतः काश्रौ ९, १३, ५; बौश्रौ; गृह्णन्ति शांश्रौ १८, २४, ९; आपश्रौ; †गृह्णे कौसू ३, ११-१५; †गृह्णामि आश्रौ २,९,९;काश्रौ; आपश्रौ १२, ७,१८[e]; २१,२१, ४[f]; माश्रौ १,४, १,१५[g]; २, २,१, २[h]; आपमं २,५, २२[3i]; भागृ १, ७ : ८[j]; वागृ ५, १९[j]; हिगृ१,२०,१[k]; गृह्णातु †आपश्रौ १, १६, ३; ८,६, २१; १५,३, ४[l]; १६, ५,३[l]; काठश्रौ; बौश्रौ ९.३:१९[l]××; †गृह्णीष्व आपश्रौ १,२५, ७; बौश्रौ १,१० : ६[2]; भाश्रौ; माश्रौ १,२, ३, ३०[m]; वाश्रौ १, ३.१,२६[m]; †गृहाण बौश्रौ ७, १६ : ४६; ८, ७ : ७; आगृ; अगृह्णत आश्रौ ८,१३, १०; वाधूश्रौ ४, २६ : ३; या ७, २६; अगृह्णन् आपश्रौ १८, १३,१९†[n],बौश्रौ; गृहीत बौश्रौ २५, ११ : १६; हिश्रौ; आपमं २, १३, १२†[o]; भागृ १,२३ : ११†[o]; गृह्णीयात् आश्रौ १,१०, ३××; शांश्रौ; गृह्णीयाताम् भाश्रौ ८, ७, ५; बौध २, २, ७१; गृह्णीरन् बौश्रौ २३, ८ : २५; क्षुसू ; गृह्णीयुः आपश्रौ १९,२, १४××; बौश्रौ.

जग्राह शांश्रौ १५,१८,१; बौश्रौ; जगृहुः बृदे ३, १३६; जगृह्म क्षुसू ३, १० : ३८; साश्र १, ३१७†[p]; ग्रहीष्यसि सु १३, १: ग्रहीष्यामि बौश्रौ ७, ६ : ३५××; वैश्रौ; अग्रहीत् आग्निगृ १,१,३ :१३[2]†[q]××: कागृ ४१, १६†[q]; मागृ १,१०,१५; २२, ५†[q]; †ग्रहीः कौसू ८७, १२; अग्रहैषम् सु १४,१.

गृह्यते बौश्रौ १४,२६ : १९××; वाधूश्रौ; गृह्येते आपश्रौ १२, २७,२; बौश्रौ; गृह्यन्ते आपश्रौ १२,१८, ११××; बौश्रौ; या १, २३; गृह्येत अप ५७, १-४,३; गृह्येरन् आपश्रौ १२,२१,२२.

ग्राहयति आपश्रौ ८, ६,२२;९, १५,७†; बौश्रौ; ग्राहयतु बृदे ३, २१; ग्राहयेत् बौश्रौ २६,५: १४; बौगृ; ग्राहयेयम् वाधूश्रौ ४,९० : २४.

जिगृहीषेत् वाधूश्रौ २, १०: ६; ९.

†गृभीत– -तः या १४,२३; –तान् कौसू ५,१.

गृह[r]– पा ३,१,१४४; पाग २, ४, ३१;४,२,७५; –†हः आश्रौ ३, ६,२४; अप ३२, १,५; अअ ५, ६; –†हम् आपश्रौ ११, ७, २; वाश्रौ; या १३, ३[2]; –हम्ऽ-हम् शांगृ ३,१,९†; –हस्य हिश्रौ ३, ८, १; ६, ७, १; वागृ; –†हाः आश्रौ १, ११, ७××; शांश्रौ; बौगृ ३,, २२[s]; या ३, १३ϕ; –०†हाः आश्रौ २,५,१७;काश्रौ; –†हाणाम् आपश्रौ ५, १८, २××; वैश्रौ; –हाणि अप ५५, ६, ३××; –हात् शांश्रौ ४, ५, १; आपश्रौ ५,७,६××; बौश्रौ; –†हान् आश्रौ २, ५, २; १२; १७[t]; शांश्रौ; आपश्रौ ६, २७, ३[3t,u]; १६, १६, ४[2t]; वैश्रौ[t] १८, १४ : १२; १५: हिश्रौ ६,७,८[3t]; द्राश्रौ ७, ३,११[3t,u]; लाश्रौ ३, ३, १[3t,u]; आपमं १, ८, २[t]; कौगृ ३,४, ३[t]; ५[3t]; शांगृ ३, ५, ३[t]; ७, २[2u];

---

*a*) पाभे. वैप १, १२३६ p द्र. । *b*) पाभे. पृ ५६९ c द्र. । *c*) पाभे. पृ ३११ d द्र. । *d*) निगृह्णाति इति पाठः ? यनि. शोधः (तु. हिगृ १,५,६)। *e*) पाभे. वैप १,६५४ m द्र. । *f*) पाभे. वैप १, १२३८ b द्र. । *g*) पाभे. वैप १, ६२७ o द्र. । *h*) पाभे. वैप १,१२३७ l द्र. । *i*) सपा. गृह्णामि <> प्रतिगृह्णामि इति पाभे. । *j*) पाभे. पृ ६९५ c द्र. । *k*) पाभे. वैप १, १२३६ f द्र. । *l*) पाभे. वैप १,१२३६ j द्र. । *m*) पाभे. वैप १,१२३६ k द्र. । *n*) पाभे. वैप १,१२३६ n द्र. । *o*) सपा. हिगृ २, ३,७ बध्नीत इति पाभे. । *p*) पाभे. वैप १,१२३६ q द्र. । *q*) पाभे. वैप १,१२३८ h द्र. । *r*) वैप १ द्र. । *s*) पाठः ? ग्राहाः इति शोधः । सपा. ?गृहा दाक्षिणानि <> ग्रहदाक्षिणानि इति पाभे. । *t*) पाभे. वैप १, १२४० n द्र. । *u*) पाभे. वैप १,१२४१ b द्र. ।

बौगृ १,५,३?[a];६[२b]?[a]; बौपि २, ४,१८?[a]; भागृ१,२७.३[b];मागृ१, १४,६[b]; हिगृ १,२९,१[२b,c];२[b]; या ४, ५; शुप्रा ३, १५०[२b,c]; –†हाय आगृ १,२,४; बौगृ २, ८, १९; –हासः आग्निगृ ३,८, २ : ३६; बौपि १,१५:४३; –हे शांश्रौ १५, १७, १××; काश्रौ; †आपमं १, ९, ४[d]; २, ८, ८[e]; †हिगृ १, ११,१[e]; १९,७[d]; या ४, २५†; ७, ६†; ८,५; ११, १६†; ४६; –†हेऽ-हे शांश्रौ १५, २३, १: आपश्रौ १६, २६, १; बौश्रौ; या ९, २१; –हेण वाधूश्रौ ३, ४९ : ४†; –†हेभ्यः आपश्रौ ५,१, ७××; भाश्रौ; –†हेषु आश्रौ ३,११,७; काश्रौ; मागृ २, १७, १[f]; हिगृ २,४,५[g]; –†हैः बौश्रौ १४,२१: १३; माश्रौ १,४,३,१; वाश्रौ.

गार्ह– पा ४,२,७५.

गार्ह्य[h]– -र्ह्याणि वैध ३,१,२.

गृह-कर्मन्– -र्म आज्यो १०,२; –र्मणः आग्निगृ २,५,९ : १; जैगृ २,६ : १; –र्मणि अप २८,२,१.

गृह-कलविङ्क[i]– पाग २,१,४८.

गृह-कारिन्[j]– -री विध ४४, ३६.

गृह-कोष्ठ-प्रवेशन– -नम् शंध १२.

गृह-क्षेत्र– -त्रयोः शंध ३०९.

गृहक्षेत्र-विरोध– -धे वाध १६,१३.

गृह-गोधा– -धा काध २७६:५.

गृह-ग्राम-पुर– -राणि अप ६८, २,३३.

†गृह-(ग्र>)ग्नी– -ग्नी पागृ १, ११,२;४; जैगृ १,२२ : २०.

गृह-दाह– -हे शांश्रौ ३,४,१३; आपश्रौ ९, ३,१७; वैश्रौ २०, ७ : ९.

गृहदाह-वह्नि– -ह्निना वैश्रौ २०,८ : ८,

गृहदाहा(ह-अ)ग्नि– -ग्निना कप्र २,९,१५.

गृह-दीपक[i]– पाग २,२,९.

गृह-देव– -वाः अप १९[२],५,४; –वान् अप ४,२,१४.

†गृह-देवता– -ताभ्यः आगृ १, २,४; आग्निगृ १,७,२ : ८; वैगृ ३, ७ : ९; ५, २ : १२; वाध ११,४; गौध ५,१४.

गृह-द्वार्– -द्वारः या ८,१०; –द्वारि आग्निगृ २, ६, ४ : २२; बौध १,५,११०.

गृह-द्वार– -रम् गोगृ ४,७, १८; –रे आग्निगृ २,६,७ : ५; बौपि ३, ४, २०; शंध १३२; ३४५; ३४६; –रेऽ-रे बौध ३,२,६.

गृहद्वार-पार्श्व– -र्श्वे गौपि १,४,१७.

गृह-धर्म– -र्मम् आग्निगृ २, ७, १० : १.

गृह-नमन– पा,पाग ८,४,३९.

गृह-नामन्– -म या ४, ५[२]; –मानि निघ ३,४;१३.

गृह-निहित– -तानाम् विध २३, ३१.

†गृह-प[k]– -०प, –पाय आपमं २,१८, ३३; भागृ २, ९ : ९; हिगृ २,९,२.

†गृहपी– -०पि,–प्यै आपमं २,१८, ३४; भागृ २,९ : ९; हिगृ २,९,२.

गृह-पति– पाग ४, १, ८४; ६,२, १६०; –तये आश्रौ २, ४,८; ४,१०,९; शांश्रौ; –†तिः आश्रौ १, १०, ५××; शांश्रौ; बौगृ ३,१०,६?[a]; –†तिना शांश्रौ ४, १२,१०[२१]; आपश्रौ ६, २६, १[२१]××; बौश्रौ; कौसू ७०, ९[२१]; –तिभ्यः भागृ ३, १३ : ९†; –तिम् आश्रौ १, १०, ४; ८, १३,१४; शांश्रौ १, १५, २†××; काश्रौ; आपश्रौ ४,१, १०[२]†[m]; भाश्रौ ४, २, २[२]†[m]; हिश्रौ १,२,५[२]†[m]; –ती निसू १०, ८ : १९; –तीनाम् बौश्रौ १०, ५६:१†; चाअ १८ : २?[n]; –†०ते आश्रौ २, ५,१२; शांश्रौ १,१५,४; २, १५,५××; काश्रौ; –तेः आश्रौ १, १०, ६××; शांश्रौ; –तौ आश्रौ ६,१०,२६; शांश्रौ ४,९,७××; द्राश्रौ.

†गृहपत्नी– -त्नी आपमं १, २, ८; कागृ २५,५; बौगृ १,५,३?[a]; जैगृ.

गार्हपत– पा ४,१, ८४; –ते काश्रौ १,६,१६; २२,४,७;

---

*a*) ग्र° इति पाठः? यनि. शोधः। *b*) पाभे. वैप १,१२४० n द्र.। *c*) पाभे. वैप १,१२४१ b द्र.। *d*) पाभे. वैप २,३खं. गृहेषु मंब्रा १,१,१३ टि. द्र.। *e*) पाभे. वैप १, १७४५ n द्र.। *f*) पाभे. वैप १,१२४० k द्र.। *g*) सपा. गृहेषु<>देवेषु इति पाभे.। *h*) विप.। तस्येदमीयः ण्यः प्र. उसं. (पावा ४,१,८५)। *i*) तु. पागम.। *j*) = वरटा- (कीट-विशेष- ⌊तु. मनु १२,६६⌋)। *k*) वैप १ द्र.। *l*) पाभे. वैप १,१२४२ i द्र.। *m*) पाभे. वैप १, ११२८ z द्र.। *n*) °तीना इति पाठः? यनि. शोधः।

लाश्रौ ८,६,१; पावा ६,२,४२; मीसू ६,६,२१.

१गार्हपत्य[a]- पा ४,४,९०; –†॰त्य आपश्रौ २,५,९; बौश्रौ १,१२:३१; भाश्रौ; –त्यः आश्रौ २,२, १३;५,१२†[b]××; काश्रौ; –त्यम् आश्रौ २,२,१; ३, १५; १७; ५,२; ७, ११; १९, ३५; ३७; शांश्रौ; काश्रौ १७, १,३; वैताश्रौ २८,२४; –त्यस्य आश्रौ १, १०, ४××; शांश्रौ; –त्यात् आश्रौ १, ११, ४; ९; २, २, १; १४; शांश्रौ २, ६, २××; १५, ५†[b]; काश्रौ; –†त्यानि शांश्रौ ४, १२, १०; माश्रौ; –त्याय माश्रौ १, ५, २, ९; आपमं †१, ३,३; ९, ४; पागृ; –त्ये आश्रौ १, १२, ३२××; शांश्रौ; –†त्येन शांश्रौ २,८, ८; आपश्रौ ६,५, ६; आग्निगृ.

गार्हपत्य-कर्मन्– -र्मभ्यः हिश्रौ ७,८:१३; –र्माणि वाश्रौ १,६,२,५;हिश्रौ ७,८:१३.

गार्हपत्य-क्रव्याद्– -व्यादौ कौसू ७०,१०.

गार्हपत्य-चिति– -तिः वाधूश्रौ ४, ११५:२;१४; –तिम् आपश्रौ १६, १५, ५; वैश्रौ १८, १२ : २६; –तीः वाधूश्रौ ३, ७९ : १४; –तेः आपश्रौ १६, १४, १; ४; वैश्रौ १८,१२ : ७; ११; हिश्रौ; –तौ आपश्रौ १६,१४,५; बौश्रौ २२, ४ : ४; वैश्रौ; –त्याम् वाधूश्रौ ४, ११५ : १६; –त्यै वाधूश्रौ ४,११५ : ६.

गार्हपत्य-दक्षिणाग्नि– -ग्नी आपश्रौ ९, ३, २१; हिश्रौ ३,६,२८××; –ग्न्योः वाश्रौ १, ३,२, २६; हिश्रौ १,८,१९××.

गार्हपत्यदक्षिणा-ग्नि-स्थान– > °नीय– -यम् वाश्रौ १, २,३,३८.

गार्हपत्य-देश– -शम् आपश्रौ १, १०, ८; –शे वैश्रौ ३,४ : २२; ८ : ११; हिश्रौ १, २,५७××; कौसू २२,१४.

गार्हपत्य-पश्चात् अप ४५,२,१७.

गार्हपत्य-प्रवाद– -दः हिश्रौ २, ७,६८.

गार्हपत्य-लक्षण[c]– -णस्य माश्रौ १, ५,२,९; ३,१; अप्राय ५, १; –णे माश्रौ १,५, २,२०; वाश्रौ १,४,२,१०.

गार्हपत्य-लोक-म्पृणा[d]– -णाः काश्रौ १७, ७, २६.

गार्हपत्य–विधान– तस् (:) अप २३,१०,४.

गार्हपत्य-शब्द– -ब्दः आपश्रौ १, १०,२१; भाश्रौ १, १०, १५; –ब्दम् वैगृ ४, ६ : १२.

गार्हपत्य-श्रुत– -तम् कौसू २२,१४.

गार्हपत्य-श्रोणि– -णिम् वैश्रौ २,२ : १८.

गार्हपत्य-संयुक्त– -क्तानि हिश्रौ ५,२,४.

गार्हपत्य-सकाश– -शात् बौश्रौ २६, ५ : ९; –शे बौश्रौ २५,११ : २७.

गार्हपत्य-स्थान– -ने काश्रौ ४, ११,८; मागृ १,६,२.

गार्हपत्यस्थानीय– -यम् भाश्रौ १,१०,१३.

२गार्हप(त्य>)त्या[e]– -त्याः वाधूश्रौ ४, ११९ : २.

गार्हपत्या(त्य-अ)-गार– -रे काश्रौ ४, ७,१४;८, १; आपश्रौ ४,३,१७; भाश्रौ.

गार्हपत्या (त्य-अ)-ग्नि– -ग्निम् वैश्रौ ४, १० : १२; –ग्नौ वैध २,६,३.

गार्हपत्या( त्य-आ )-ज्य– -ज्यम् अप्राय २,३.

गार्हपत्या(त्य-आ)-दि– -दीन् वैध २,३,४;४,३; ७,५.

गार्हपत्या(त्य-अ)न्त– -न्ते माश्रौ १,२, ५, २०; ७,४, ११;६,१६; २,२,१,४१××.

गार्हपत्या ( त्य-अ ) न्वाहार्यपचन– -नौ आपश्रौ १, ७,१३.

गार्हपत्या(त्य-अ)न्वा-हार्यपचना(न-आ)हवनीय-सभ्या (भ्य-आ) वसथ्य– -थ्यानाम् वैश्रौ १,८ : ९.

गार्हपत्या (त्य-आ)यतन– -नम् काश्रौ ४, ८, २१; आपश्रौ ५,४, २; १२××; बौश्रौ; –नात् भाश्रौ ५,२, १८; हिश्रौ ३, ३, ९; –ने आश्रौ ३, १२, २५; आपश्रौ.

गार्हपत्या( त्य-अ )-र्चिस्– -र्चिः वैश्रौ २,४ : ३.

---

*a*) =तत्स्थान- [काश्रौ १७, १,३ प्रमृ.] शिष्टं वैप १ द्र.। *b*) पामे. वैप १,१२४२ p द्र.। *c*) वस. उप. = कुण्ड-चिह्न-। *d*) मलो. कस. पूप. = चिति-, उप. = इष्टका-। *e*) विप. (इष्टका- [तु. C.])।

गार्हपत्या(त्य-आ)हवनीय- -ययोः आश्रौ ३, १०,१५; १३, ६; आपशु ४,१; ५[२]; काशु; -यौ आश्रौ २, ५, २; १२; ४, २, १२; शांश्रौ २, १२, ६; काश्रौ १, ८,२३; २६, २, ३८; आपश्रौ.

गार्हपत्याहवनीय-संब(न्ध>)न्धा[a]- -न्धाम् वैश्रौ १,२ : १२.

गार्हपत्ये(त्य-इ)ष्टका- -काः वैताश्रौ २८,२५.

गार्हपत्यो(त्य-उ)प-स्थान- -नात् भाश्रौ १, १०, १२.

गार्हपत्योपस्था-ना(न-अ)न्त[a]- -न्तम् भाश्रौ ८,२०,६.

गार्हपत्यो(त्य-उ)ल्मुक- -कात् शांश्रौ ३,१९,१४.

गृहपति-गोत्रा(त्र-अ)न्वय- -याः आश्रौ १२,१०,३.

गृहपति-भक्त- -क्तम् अप १,२७,२.

गृहपति-मरण- -णे आश्रौ १२,६,३४[२]; काश्रौ २४,६,१८.

गृहपति-महानस- -सात् गोगृ १,४,२४.

गृहपति-मुख्य- -ख्यान् वाश्रौ ३,२,१,१२.

गृहपति-यविष्ठ- -ष्ठयोः ऋअ २,८,१०२.

गृहपति-वत् मीसू १०, ६, ५५.

गृहपति-वदन- -नम् शांश्रौ १०,२०,१.

गृहपति-वर्जम् काश्रौ १२, १,१८.

गृहपति-सप्तदश- -शाः आश्रौ ४, १, ८; शांश्रौ १३, १४,१.

गृहपत्य(ति-अ)न्वारम्भ- -म्भः काश्रौ १२,१,१३.

गृहपत्या(ति-आ)हवनीय[b]- -ये काश्रौ १२,१,१६.

गृह-पोषण- -णे आज्यो ४,८.

गृह-प्रद- -दः वाध २९,१४.

गृह-प्रपदन- -नम् आगृ २, १०,१.

गृह-प्रवेश- -शः आज्यो ८,८. -शम् आज्यो ५,९.

गृह-प्रवेशन- पाग ५,१, १११[c]; -नम् कौगृ ३,३,८.

गृहप्रवेशनीय- पा ५, १, १११.

गृह-भू-कुड्या(ड्य-आ)द्यु(दि-उ)पभेत्तृ- -त्ता विध ५,१०८.

गृह-मध्य- -ध्ये मागृ २, १२, ६; वैगृ ३,७ : ११.

गृह-मध्य(म>)मा- -मायाम् मागृ २,१२.५.

गृह-मही-रथ- -थाः अप १४, १,८.

†गृह-मेध[d]- -धम् आपश्रौ ५, २६,५; भाश्रौ ५,१८,१; -धान् माश्रौ १,७,५, २३[e]; -०धासः आश्रौ २,१८,४; शांश्रौ ३, १५, ९; -धे आपध १, ४, २९; २, २५, ७; हिध; -धेभ्यः आश्रौ २, १८, ३; शांश्रौ; माश्रौ १, ७, ५, ११;२२†[f].

गृहमेधीय[g]- पा ४, २, ३२; -यः शांश्रौ १४,१०,१६; बौश्रौ ५, १० : १५; २५, २ : १७; भाश्रौ; -यम् बौश्रौ ५,१०:९; हिश्रौ ३,६,५†; -यस्य आपश्रौ ८, ९,९; बौश्रौ २१, ३ : १४; १६××; भाश्रौ; -यात् भाश्रौ ८, १२,१७; -याय भाश्रौ ८,११, ९; माश्रौ १, ७, ५, १०; हिश्रौ ५, ३, २; -ये बौश्रौ २१, ६ : १८; माश्रौ १, ७, ५, ५; -येन आपश्रौ २२, ८, १६; काश्रौसं २९ : ७; बौश्रौ.

गृहमेधीय-प्रभृति- -तीनि बौश्रौ १७,६० : १०.

गृहमेधीय-वत् मीसू १०, ७,५०.

गृहमेधो(ध-उ)पदेशन- -नम् आपध १, २, ७; हिध १, १,४०.

गृहमेध्य- पा ४,२,३२.

गृह-मेधिन्[g]- -धिनः आश्रौ १०, ७, १; शांश्रौ १६, २, २; आपश्रौ; -धिनम् कौगृ ३, १०, ३५; शांगृ २,१६,६; -धिनाम् वैताश्रौ ९, २; आज्यो ५, ८; -धिनोः आपध २,१,१;१५; हिध २,१,१;१४; -धिभ्यः आपश्रौ ८, ९, ८; २०, १४, १०†[h]; काश्रौ ५, ६, ६; बौश्रौ; -†धी आपश्रौ १७,१६,१८; वैश्रौ १९, ६ : १०८; हिश्रौ.

गृहमेधिनी- -†नी आपश्रौ ३,१०,९; भाश्रौ ३,

*a*) विप. । बस. । *b*) मलो. कस. । *c*) तु. पागम. । *d*) =औपासन-होम- । वैप १ द्र. ।
*e*) पाभे. वैप २,३खं. गृहमेधिनः टि. द्र. । *f*) पाभे. वैप २, ३खं. गृहमेधिभ्यः टि. द्र. । *g*) वैप १ द्र. ।
*h*) पाभे. वैप १,१२४३ i द्र.

१२,८; –नीनाम् वाध २१,१४.
गृहमेधि-व्रत– -तम् गोगृ १, ४,१८.
गृहमेधि-स्विष्टकृत्– -कृतौ काश्रौ ५,६,१७.
गृह-युु[a]– पाउना १,३७.
गृह-राज[b]– -जाय बौगृ २, ८, १९†.
गृह-लाभ– -भः वाध २९,१३.
†गृह-वत्– -वान् आपश्रौ १, २,११[2]; भाश्रौ १,३,४[2].
गृह-वृद्धि– -द्धिम् आग्निगृ २, ५,९ : १; जैगृ २,६ : १.
गृह-शयना(न-अ)लङ्कार-वासस्– -सांसि शंध २६२.
गृह-शान्ति– -न्तिम् आग्निगृ २, ५,९ : २; जैगृ २,६ : २.
गृह-संकाश– -शे कौसू २४, ११; ७७,१४.
गृह-सर्प– पाग २,१,४८[c].
गृह-स्थ– -स्थः आग्निगृ ३, १०, १:६××; बौगृ; –स्थम् बौपि ३, १,१०; वैगृ ७,१ : १४; गौपि; –स्थस्य आग्निगृ २, ७, ३ : १; ३, १०,४ : ३०; बौगृ; –स्थाः वैध १, ५, १; –स्थान् आग्निगृ ३, ११, १ : ११; वाध ११, १७; –स्थानाम् अप ५३, ५, २; वाध ६, १९; शंध; –स्थे वाध ८,१५; –स्थेन आग्निगृ २, ७,११ : ९.
गार्हस्थ[d]– -स्थस्य गौध ३,३६[2].
गार्हस्थ्य[d]– -स्थ्यम् वैगृ ३,४ : १४; ४,२ : १०; आपध.
गार्हस्थ्य-नैयमिक– -केषु वाध १९,३.
गार्हस्थ्या(स्थ्य-अ)ज्ञ– -ज्ञानाम् वाध १९,१३.
गार्हस्थ्या(स्थ्य-अ)नुसरण– -णम् वैध १,३,३.
गृहस्थ-धर्म– -र्माणि वैगृ ६, १८ : ८; –र्मान् आग्निगृ ३, ७, ४ : ३२. बौपि.
गृहस्थधर्म-वृत्ति– -त्तौ शंध ४६१[e].
गृहस्थ-वत् वैगृ ५,७ : १३.
गृहस्थ-साधु– -धून् गौपि २,२,१०.
गृहस्था(स्थ-आ)श्रम–> °मिन्– -मी वैध ३,१,१.
गृहा(ह-आ)गत,ता– -तम् वैध १,४, १; –ताः गौपि १, ७, ९; –ताम् गोगृ २,४,६.
गृहा(ह-आ)नन[f]– -नौ सु २,३.
गृहा(ह-आ)वश्यक– -कानि शंध ३३५.
गृहा(ह-आ)श्रम– -मात् विध ५९,२७.
गृहाश्रमिन्– -मिणः विध ३३,२; ५८,१; –मी विध ५९, १;२८;२९.
गृहा(ह-अ)श्व-रथ-भूम्य(मि-अ)र्थ– -र्थे शंध १४४.
गृहिन्– -ही आग्निगृ ३, १०,४ : २३; कप्र ३, २, २; शंध.
गृहिणी– -णी कौसू ७३,१†; –णीम् अप २०,७,१०.
गृहिणी-भक्त– -क्तम् अप १,३०,२.
गृहो(ह-उ)त्सर्ग– -र्गः शांगृ ५, ११,१.
गृहो(ह-उ)पकरण– -णानि वाध १७,४५.
१गृह्य,ह्या[g]– -ह्यः शांगृ ५,२,४; गोगृ १, १, २१; ३, १६; द्रागृ; –ह्यम् आगृ १, ९, १; कौगृ ३,४,५; शांगृ; –†ह्याः आपश्रौ ८, ११, २; बौश्रौ ५, १६ : ६; भाश्रौ; –ह्याणि बौश्रौ २९, १२ : ६; आगृ १,१,१; आग्निगृ २,७,२ : १××; हिगृ; –ह्यात् द्रागृ ३,२,१; –ह्यान् काश्रौ ४, १२,२३; वाध ११,८; –ह्यानि बौगृ २,६,१७;–ह्याभ्यः पागृ २, ९, २; कागृ ५४, ४; बौगृ; –ह्ये आगृ १, २३,२५; कौगृ; –ह्येषु कौसू ८९,१६.
गृह्य-पुरुष[h]– -षः वागृ १,१.
गृह्य-प्रायश्चित्त– -त्तानि आग्निगृ २, ७, ४ : १; भागृ ३, १८ : १.
गृह्य-स्थालीपाक– -कानाम् पागृ १,१,१.
गृ(ह्य>)ह्या-कर्मन्[i]– -र्माणि गोगृ १, १, १; द्रागृ १, १,१.
गृह्या(ह्य-अ)ग्नि– -ग्निम् बौगृ ३, ५,९; अप २२, १, ३; –ग्नौ कौगृ १, १७, ७; वाध ११, ३; वैध ३,१,२.
गृहयालु– पा ३,२,१५८.

---

*a*) =गृह-पति-। *b*) वैप १ द्र.। *c*) तु. पागम.। *d*) =आश्रम-विशेष-। *e*) °वृत्तः इति मिताक्षरा [याज्ञ ३,२९०]। *f*) विप. (ऋषि-)। बस.। *g*) विप., नाप. (बाल-, देवता-, कर्मन्- प्रभृ.)। *h*) =परिशिष्ट-विशेष-। *i*) कस. पूप. छान्दसो दीर्घः (तु. गृह्यासंग्रहः [१, ३३-३८], भट्टनारायणः, MW.; वैतु. रुद्रस्कन्दः द्वे पदे इति)।

गृहीत,ता– पाग ५, २, ८८; –तः काश्रौ १०,७,८; बौश्रौ; –तम् आपश्रौ ९,४,१३;१६,९;भाश्रौ; –तम्ऽ-तम् बौश्रौ ३,१६:१९; –तस्य आपश्रौ २,७,१२;भाश्रौ; –तानाम् आश्रौ १०, १, १७; –ताम् अप्राय २, ५; –तायाम् अप ३७, ६,१; वैध ३, ११,३; –ते शांश्रौ ३, २०,२०; ७,१५, १७; हिश्रौ;–तेन अप १,३१,७; ३५,३; विध ६६, १; ७९, १; –तेषु जैश्रौ ९ : २५; वैताश्रौ ३०,१०.

गृहीत-गर्भा-लिङ्ग– -ङ्गानि वैगृ ३,१० : १.

गृहीत-ग्रन्थ[a]– -न्थः नाशि १, ६,२२.

गृहीत-दर्भ[a]– -र्भः अप १८[२], ८, १.

गृहीत-धन-प्रवेश– -शे विध ६,९.

गृहीतधनप्रवेशा(श-अ)र्थ– -र्थम् विध ६,९.

गृहीत-पाणि[b]– पावाग २, २, ३६.

गृहीत-पा(द>)दा[a]– -दाम् विध ९९,१.

गृहीत-मधुपर्क[a]– -र्कः आग्निगृ १,६,१ : ९.

गृहीत-मूल्य[a]– -ल्यम् विध ५, १२७.

गृहीत-शिश्न[a]– -श्नः विध ६०, २४.

गृहीत-सोम[a]– -मम् काश्रौ ७, ९,१.

गृहीत-स्तोत्र[a]– -त्रः जैश्रौका १८०.

गृहीता(त-अ)नुगमन– -ने काश्रौ २५,३,१५.

गृहीता(त-अ)स्तमित– -तयोः अप ५३,६,४.

गृहीतिन्– पा ५,२,८८.

गृहीत्वा आश्रौ १,११,९××; शांश्रौ; गृहीत्वाऽगृहीत्वा काश्रौ ९, ५, ९××.

गृह्णत्– -ह्णतः बौगृ १,८,६; –ह्णता जैश्रौका १०४; –ह्णत्सु जैश्रौ ८ : ४; –ह्णन् आश्रौ ३,६,१६; आपश्रौ;–ह्णन्तः बौश्रौ २६,१२ : २३; –ह्णन्तम् वैताश्रौ ५, ७; ३०,१०.

गृह्णती– -तीम् कागृ १४,८.

गृह्णन्ती– -न्तीम् गोगृ २,१,७.

गृह्णाति–>°ति-कर्मन्– -र्मा या ६, ८.

गृह्णान– -नः बौश्रौ १, १२ : ५४××; –नाः काश्रौ ८,१,१८; बौश्रौ.

गृह्य आग्निगृ २, ६,६ : २०; द्रागृ ३,१,१४; बौध १,४,९××.

गृह्य– पा ३,१,११९.

गृह्यमाण,णा– -णः अप ५३,२,३; शुअ १,४९०; –णम् निसू १०, ८:३६; –णान् माश्रौ ५,२,१६, १२; –णानि माश्रौ ५, २,१६, १०; हिश्रौ ६, २, ९; –णासु माश्रौ १, ४, १, १२; बृदे ५, १५४; –णे आपश्रौ १३, ९,४; जैश्रौका; –णेषु शांश्रौ ७, १५, १५; आपश्रौ १४,९,४; बौश्रौ.

†ग्रभ[c]– -भाय या ३,३∮.

ग्रहण[d]– पाउभो २,२,१९४; –णम् काश्रौ ३, ६, १८; ५,४,६××; ९, ५,१५[e]; आपश्रौ; पा ५, २, ७७; पावा १, ४, ५१××; –णस्य तैप्रा १, २२; मीसू १०, ७,३३××; –णाः माश्रौ २, ४, २,२[f]; –णात् काश्रौ ७,५,२४; १२, ६, २४; आपश्रौ; –णानि आपश्रौ १३,२,५; हिश्रौ ८,४, ६; –णे आपश्रौ १८,१३, १९; बौश्रौ; पावा २, ४, ७७; –णेषु हिश्रौ ९,७, २१; पावा १,१, ५७.

ग्रहणी– -णी[g] कौसू २९, २; –ण्यौ[h] आपश्रौ १८,२,६; हिश्रौ १३,१,१८.

ग्रहण-काल– -ले अप ११, १, २; १३,१,२.

ग्रहण-निर्वाप– -पे बौश्रौ २७, ४ : २१.

ग्रहण-प्रतिषेध– -धात् पावा १, ३,९.

ग्रहण-प्रदान– -ने आपश्रौ १२, २७,३.

ग्रहण-भेद– -दात् काश्रौ ९, ४,२३.

ग्रहण-मन्त्र– -न्त्रः बौश्रौ २५, २३,६.

ग्रहण-लवन-स्तरणा(ण-आ)ज्य ग्रहण– -णेषु काश्रौ १,७,९.

ग्रहण-विशेषण-त्व– -त्वात् पावा १,१,१२.

ग्रहण-विसर्ग– -र्गौ वैगृ २,१३ : १७.

---

*a*) विप. । बस. । *b*) तु. पागम. । *c*) वैप १ द्र. । *d*) भाप., नाप. (उपराग- [अप.])। *e*) ग्रहग्रहणम् इति Web. । *f*) = मन्त्र-विशेष- (तु. मै १,३,१६ प्रमृ.)। *g*) = कटक-बन्ध- । *h*) = ऋग्-विशेष- (तु. मै १,११,४)।

ग्रहण-शक्ति- -क्तिः माशि १६,४.
ग्रहण-संयुक्त- -क्ते आपश्रौ १८, १३,२०.
ग्रहण-सादन- -नाः आपश्रौ १२, १५, १०; -नौ आपश्रौ १२, १५,११;१८,१०××; वैश्रौ.
ग्रहण सादन-प्रत्यसन- -नाः आपश्रौ १६,३३, १; वैश्रौ १८, १६ : ६८.
ग्रहण-सादन-स्तोत्रोपाकरण-होम-भक्षाहरण-भक्षण- -णानि काश्रौ १२,४,१५[a].
ग्रहण-सादना(न-अ)वदान-प्रदान- -नेषु काश्रौ १,५,१२.
ग्रहणा(ण-आ)च्छादन- -ने अप ६१,१,२४.
ग्रहणा(ण-आ)दि- -दि काश्रौ २५,७,७; -दिभिः शंध ११५.
ग्रहणा(ण-आ)नर्थक्य- -क्यम् पावा १,१,३४.
ग्रहणा(ण-अ)न्त[b]- -न्तम् आगृ १,२२,३; भागृ ३, ५ : २; बौध १,२,४; गौध २,५४.
ग्रहणा(ण-अ)र्थ,र्था- -र्थम् मीसू ९, २, १३; -र्था मीसू ७, २, १५.
ग्रहणा(ण-आ)सादन- -ने आपश्रौ ८,१४,७.
ग्रहणा(ण-आ)सादन-प्रोक्षण- -णानि शांगृ १,३,४.
ग्रहणो(ण-उ)पाधि- -धीनाम् पावा १,१,७२.

ग्रहणि[c]- पाउ ५, ६७.
ग्रहिण- पाउभो २,२,१९४.
ग्रहीतव्य,व्या- -व्यः आपश्रौ १२, ८,१२; बौश्रौ २४,२५ : १[२]××; या ३, ३; -व्या जैश्रौका १७०; -†व्याः बौश्रौ १४, ११ : २८; २९××; भाशि ८८; -व्यौ आपश्रौ १२,८,१३;१४[२].
ग्रहीतुम् आपश्रौ १२, ८,१०; हिश्रौ ८,२,३२?[d]; वैश्रौ १५,९ : ७.
ग्रहीतु-काम- -मः अप ५३, १, २.
ग्रहीष्यत्- -ष्यतः द्राश्रौ १५, २,७; लाश्रौ ५,१०,७; -ष्यन् आपश्रौ १,१६,४; बौश्रौ.
ग्रहीष्यमाण- -णः बौश्रौ २९,४ : १; -णेषु द्राश्रौ १५, २, ११; लाश्रौ ५, १०,११.
ग्राह- पा ३, १,१४३; पाग ३, १, १३४[e].
ग्राहक- -कः अप ४७,१,१४.
ग्राहम् माश्रौ २, ३,८, २××.
ग्राहयित्वा बौश्रौ ५, १ : ३१; ५ : १९××; वागृ १४,३.
†ग्राहि[f]- -हिम् कौसू ६१, २२; -ह्या अप्रा २,२,१९[३g]; -ह्याः आपमं २, १२, १०; आग्निगृ २, १,४ : ९; हिगृ.
ग्राहिन्- पा ३,१,१३४.
ग्राहुक- -कः भाशि ६४†; -काः हिश्रौ ११,३,१९.
ग्राह्य,ह्या- -ह्यः आपश्रौ १२,८, ६; १४, २६,१†××; हिश्रौ; -ह्यम् कप्र २, ५, २१; अप ३८, १, ६; याशि २, ११७[२]; -ह्या कप्र १, ८, १७; -ह्याः वैश्रौ ११, १० : ६; १४××; कप्र ३,७,३; अप; -ह्याणि वैश्रौ ११, ११ : ८; -ह्याम् विध ५७,११.
ग्राह्य-क- -कम् आग्निगृ २, ७, ७ : ९.
ग्राह्य-लोक[b]- -कः बौश्रौ २१, २१ : ४.

जिघृक्षत्- -क्षन् गोगृ १,१,८;२०.
गृष्टि[i]- पाउभो २, १, १८८[h]; पाग ४, १, १३६; -ष्टिः माश्रौ ५, २, १०, १३; अप १, ५०, ३; -ष्टेः जैगृ १, ५ : १; कौसू १९, १५; -ष्ट्यै बौश्रौ २८,४ : ८.
गार्ष्टेय[i]- पा ४,१,१३६.
गृष्टि-दामन्- -म कौसू २४,७.
गृह- प्रमृ. √गृभ्, ह् द्र.
√गृ (शब्दे) √गॄ द्र.
√गॄ[1] पाधा. तुदा. पर. निगरणे, गिरति या ९,४; १०,२३; १४, १८[२];२१[२]; गिलति या ९,२४.
†जगार बौश्रौ १४,७:४; भाश्रौ ६,१,९; या १४,१८ф; अगारीः या ६,८.
†अजीगः[i] निघ ४, ३; या ६, ८ф; ऋप्रा १, १०३; शुप्रा १, १६८; तैप्रा ८, ८.
गरण- > गरण-वत्- -वान् या ७, १८.
गरमाण- > °ण-रोहिन्- -हि या ६,१७.

a) तु. चौसं. Web. च; वैतु. कासं. °णप्रदानस्तो° इति। b) विप.। बस.। c) = ⌊शारीरस्थ-⌋ कला-विशेष- (तु. अष्टाङ्गहृदये शारीरस्थानम् ⌊३, ५०⌋) तात्स्थ्यात् = प्रहणी- ⌊रोग-⌋। d) गृही° इति पाठः? यनि. शोधः। e) तु. पाका.। गाह- इति भाण्डा.। f) वैप १ द्र.। g) सकृत् पाभे. वैप १, १२४५ a द्र.। h) < √गॄ ⌊निगरणे⌋। i) या २, २८; ६,८; ९,४ पा ८, २,२०;२१ पावा १,३,५१; ७,२,११४; ८,२, २१ परागृष्टः द्र.।

गिरण- -णे अप ४८,४९†.

गिरति->°ति-कर्मन्- -र्मा या ६, ८.

गिल- -ले पावा ६,३,७०.

गिल-गिल- -ले पावा ६,३,७०.

गीर्त्वा बौश्रौ १८,४७ : १;२†;२४; आपगृ ७,१९,७.

**√गेप्** पाधा. भ्वा. आत्म. कम्पने गतौ च.

**√गेव्** पाधा. भ्वा. आत्म. सेचने.

**√गेष्** पाधा. भ्वा. आत्म. अन्विच्छायाम्.

गेय-, गेष्णु- √गै द्र.

गेह[a]- पाग २,४,३१; फि ३; -हम् पावा १,४,१; -हात् वागृ ४, २१; वैगृ ५,२ : १; -हे वैगृ ६, १८ : ३; पा ३,१,१४४.

गेहा(ह-अ)ग्नि- -ग्नौ कागृउ ४० : ११.

गेह-दाह- -हे काश्रौ २५,४,३६.

गेह-द्वार- -रम् द्रागृ ४,२,१३.

गेहा(ह-अ)न्तर- -रम् आग्निगृ २, ४,६ : ४२.

गेहे-क्ष्वेडिन्-, °तृस[b]-, °दाहिन्-, °दृस-, °धृष्ट-, °नन्दिन्[c]-, °नर्तिन्[c]-, °नर्दिन्-, °पटु[c]-, °पण्डित[c]-, °प्रगल्भ[c]-, °मेलिन्[c]-, °मेहिन्- °विचितिन्[c]- °विजितिन्-, °व्याड-, °शूर- पा, पाग २,१,४८; ६,२,८१.

**√गै**[d] पाधा. भ्वा. पर. शब्दे, **गायते** माश्रौ ४, ४, ३२; वैश्रौ; **गायति** शांश्रौ ५, १२, ३; १६, १७,४; काश्रौ; **गायतः** बौश्रौ १५, ९ : १०; हिश्रौ १४, २,६; १८; १६, ६, ४०†[e]; बौगृ; **गायन्ति** आश्रौ ७, ८, ३†; †शांश्रौ ११, ११, १२; १२, २६, २२××; काश्रौ; **गायसि** आपमं १,१३,१†; बौगृ; †**गाये** जैश्रौ ८ : १६; द्राश्रौ २,४,११; †**गायत्** शांश्रौ १०,११,६;११, ११, ९; ऋअ २, १, १७३; **गायात्** आश्रौ ९,९, ८; १०,७, ९; शांश्रौ; †**गायतु** आपश्रौ २१, २०, २[3]; हिश्रौ; †**गाय** आश्रौ ८,१, १८; ९, ११, २१; शांश्रौ; वैताश्रौ १७, २?[f]; कौसू २३, २?[f]; ५०, १३?[f]; ५९, २५?[f]; अअ ६,१?[f]; †**गायतम्** आपगृ १४, ४; बौगृ १,१०, १०; †**गायत,** > ता आश्रौ ७,३, २××; शांश्रौ; **अगायन्** वाधूश्रौ ४, ४७ : १;६; **गायेत** नाशि १, ६, १५; **गायेत्** आपश्रौ १५, १९, ११; भाश्रौ; जैश्रौ २२ : १६?[g]; २५ : ३?[g]; **गायेताम्** आपश्रौ २०,७,१;२१, २०,१†[e]; **गायेयुः** आपश्रौ २१, १९,१९†; जैश्रौका १८५. **जगौ** बृदे २,३८;४०××; **जगुः** बृदे ७,१०१; **गास्यामि** वाधूश्रौ ४,४७ : ६; पागृ १,७,२†[h]; †**गास्यामः**[h] मागृ १, १०,१५; वागृ १४, १३. **गीयते** शांश्रौ १६,८,२८××;वैश्रौ ८,१४:३; हिश्रौ; **गीयन्ते** माशि १,७, **गीयताम्** जैश्रौका ५४. **गापयेत्** द्राश्रौ २,१, ११; लाश्रौ १,५,८?[i]; कौगृ.

गातव्य- -व्यम् जैश्रौका ४०;५४.

गाथक- पा ३,१,१४६.

गा(थ>)था[a]- पाउ २,४; -थया बौश्रौ १६, ६:५; निसू २, ११ : ३०†; अप; -था भागृ २,२१ : १०; अप ४८,१०२†××; विध ८०,१३; ८३,२०; ८८,३; निघ १, ११†; -थाः काश्रौ २०,२, ७†; बौश्रौ; -थानाम् काश्रौ १५,६,३; -†थाम् शांश्रौ १८, १५, ५?[j]; वाधूश्रौ ४,४७:५; ६; १२; पागृ; -थायाः आश्रौ ९, ३,११; शांश्रौ; -थासु वाश्रौ ३, ३,३,३३; ४,१,३६; ऋत २,४, ८; -थे विध ७८,५१.

गाथा-कार- पा ३,२,२३.

गाथा-मिश्र,श्रा- -श्रम् या ४, ६; -श्राः आपश्रौ १८,१९,१०; हिश्रौ १३,६,३५.

गाथिक- -कम् नाशि १,१,२.

†२गाथिन्[a]- -थिनः आश्रौ ६, ४,१०;७,२,३; शांश्रौ; या ७,२.

गान- -नम् काश्रौ ४,९,५; जैश्रौका ११९; १५९; द्राश्रौ; -नस्य नाशि १,३,११?[k]; -नेषु कप्र ३, ८,२१.

गान-काल- -लम् जैश्रौ २२:१; २३ : १; जैश्रौप १; -ले द्राश्रौ १५,४,१२.

गान-जाति- -तिषु निसू १,६:१.

गान-संयोग- -गात् मीसू ९,१, ५५.

---

*a*) वैप १ द्र. । *b*) तु. पाका. । *c*) तु. पागम. । *d*) या १,८; ७,१२ परामृष्टः द्र. । *e*) सप्र. **गायतः**<>**गायेताम्** इति पाभे. । *f*) शोधार्थं वैप १,६२६ l द्र. । *g*) **ग**° इति पाठः? यनि. शोधः । *h*) परस्परं पाभे. । *i*) **गायेत्** इति पाठः? यनि. शोधः (तु. द्राश्रौ. अग्निस्वामी च)। *j*) °**थम्** इति पाठः? यनि. शोधः (तु. ऐआ ५,२,१०) । *k*) °**यन**° इति लासं.? ।

**गायत्**– -**यतः** आश्रौ ८,७, २३; वाधूश्रौ ४, ४७ : ९; द्राश्रौ; –**यत्सु** कौसू ९३,१३; अप ७२, २,२; –**यन्** माश्रौ ६,१,२,२७; लाश्रौ १०, १९, १०; –**यन्तः** पागृ ३, १०, ९; –**यन्तम्** वाधूश्रौ ४,४७ : ९.

**गायन्ती**– -**न्त्यः** आपश्रौ २१, १९,१८; बौश्रौ.

**गायत्र**[a]– पा ५, ४, ३८[b]; –**त्रः** आश्रौ ४, १२, १; शांश्रौ; वैध[c] १, ३, १; २; –**त्रम्** आश्रौ ४, १३, ७××; शांश्रौ; या १,८†φ; †**त्रस्य** बौश्रौ १३, ३२ : १०[d]; द्राश्रौ ९, ३, ४; लाश्रौ; –**त्राः** आश्रौ ६, ४, १२; निसू ४, १० : ३; पिं ३, २६; –**त्राणाम्** शांश्रौ ७, २६,१२; –**त्राणि** शांश्रौ १२,२, १७; जैश्रौ ११ : १३; क्षुसू २, ९:२; निसू; –**त्रात्** शांश्रौ ९, २०, ८; †बौश्रौ १०, ३५ : ५; १४, २२ : १०; निसू २,७ : २४; –**त्रान्** आश्रौ ८, ८, १; बौश्रौ १०, ५६:९; ५८:६××; –†**त्राय** शांश्रौ ९,२७, १; १७, १३, १; आपश्रौ २०, ९, २; बौश्रौ १५, १७ : ११; माश्रौ; शुअ ३,१३२?[e]; –†**त्रे** आश्रौ ८, २,१२; आपश्रौ ५,१६,४; बौश्रौ; –**त्रेण** आश्रौ १,३,२२; ६,५,२; शांश्रौ ४,१२,४××; काश्रौ; –**त्रैः** उनिसू १ : ५३; ५६-५८; पिं ३, २३; ४८; –**त्रौ** आश्रौ ६, १३, ५; आपश्रौ २२, ६, ३; वाधूश्रौ ४,९८ : ८; १३; हिश्रौ.

**गायत्री**[f]– पाग ४,१,४१[b]; ५, ४, ३८[b]; –**०त्रि** मागृ १, २,२; –**त्रियः** वाधूश्रौ ४,९१:३; ११५:११;१२; –**त्रिया** †आपश्रौ १,६,८; ५,२, ४; †बौश्रौ १३, ७ : १८[g]; १४, २४ : ३५[g]; २८:१५[g]; १७, १७ : १०; २७, १० : ६[g]; वाधूश्रौ ४,१०५ : १; हिश्रौ ३,१,११××; –†**त्रियाः** आपश्रौ १४, १९, १[h]; बौश्रौ १४, ४ : १७; हिश्रौ १५, ५, १६; –†**त्रियै** आपश्रौ ३, १८, ४[i]; बौश्रौ ३, २३ : १८[i]; १४, २२ : १०; भाश्रौ ३,१४,२[i]; वाधूश्रौ; हिश्रौ २,८,१[i]; –**त्रियौ** वाधूश्रौ ४,८५ : ३; –**त्री** आश्रौ २, १४, १९; ४, १२,२; शांश्रौ ७, २७, १××; काश्रौ; या ७, १२φ; –**त्रीः** शांश्रौ १८, १३, १; ८; काश्रौ; आपश्रौ २२,११, २२?[j]; हिश्रौ १७, ५, १४[k]; २१, २, ६[k]; –**त्रीणाम्** शांश्रौ ९, ६, ११; निसू ४, ९: २;७,२:६; –**त्रीभिः** आपश्रौ ५, ६,२××; बौश्रौ; –**त्रीभ्यः** काश्रौ १७, १२, १२; –**त्रीभ्याम्** माश्रौ ६, १, ४, २०; वाश्रौ; –†**त्रीम्** आश्रौ १,४, ९; शांश्रौ १४,३३, ७; १८, ७,२; १६,२; आपश्रौ १०, ९, १; १३, २२, १[l]××; बौश्रौ; या ७,१२; –**त्रीषु** आश्रौ १०,२,२०; बौश्रौ १८, १ : ८; लाश्रौ; –**त्र्यः** आश्रौ ६,२, ३; ३,५; शांश्रौ; –**त्र्या** आश्रौ ३, १२, २२[g]; १४, १०; आपश्रौ ९, १३, ८†××; बौश्रौ; भाश्रौ ९, १२, १२[g]; कौसू १३३, ६[g]; –†**त्र्याः** आपश्रौ १४, २६, २; वैश्रौ; –**त्र्याम्** क्षुसू २,१४ : ६; द्राश्रौ ८, ४, १३; लाश्रौ ४, ८, १२; ६, ३, १८; निसू; –**त्र्यै** शांश्रौ १३, ५, ४[h]; †काश्रौ २, १, १८[l]; २५, १४, १५[n]; बौश्रौ; –**त्र्योः** ऋअ २, १०, १०१; –**त्र्यौ** शांश्रौ १६, २२, १२; आपश्रौ ५, २८, २××; माश्रौ.

**गायत्रि-या(मन्>)म्नी**– -**म्नी**[m] वैश्रौ ५, ७ : ८; हिश्रौ ६, २,१७.

**गायत्री-ग(र्भ>)र्भा**– -**र्भा** अअ १०,८.

**गायत्री-जप-निरत**– -**तः** विध ८३,१४; ८९,३.

**गायत्री-तृतीय-सवन**[n]– -**नः** बौश्रौ १६,१० : ८.

**गायत्री-त्रिष्टुभ्**– -**ष्टुभोः** लाश्रौ ७, १२, ११; –**ष्टुभौ** शांश्रौ १, १७, ९; शुअ २, ६९××.

**गायत्री-त्रिष्टुब्-उ-ष्णिह्**– -**ष्णिहः** शुअ २,१३७.

---

*a*) वैप १ द्र. । *b*) तु. पागम. । *c*) = ब्रह्मचारि-विशेष- । *d*) पाभे. वैप १, १२४७ a द्र. । *e*) ॰त्र्याय इति पाठः? यनि. शोधः ( तु. मा २९,६० ) । *f*) वैप १ द्र. । *g*) पाभे. वैप १, १२४७ e द्र. । *h*) पाभे. वैप १,१२४७ f द्र. । *i*) पाभे. वैप १, १२४८ i द्र. । *j*) ?गायत्रीःसंपूर्णाः>गायत्री-संपन्नाः इति शोधः (तु. C. [तु.लाश्रौ ९,४,३१]) । *k*) ग॰ इति पाठः? यनि. शोधः । *l*) पाभे. वैप १, १२४६ l द्र. । *m*) सपा. ॰त्रियाम्नी <> ॰त्रीयाम्नी इति पाभे. । *n*) विप. । बस.>कस. ।

गायत्री-त्रिष्टुब्-जगती- -तीभिः बौध १,२,१२; -तीषु हिश्रौ २१,२,५†.

गायत्री-दश-साहस्र- जप- -पेन विध ५५,५.

गायत्री-पाद- -दम् लाश्रौ १०,६,९.

गायत्री-प्रतिपत्क[a]- -त्कम् क्षुसू १,१ : २३.

गायत्री-प्रातःसवन[a]- -नः बौश्रौ १६,१० : ५; -ने बौश्रौ २६,१५ : ४.

गायत्री-बृहती- -त्यौ शुअ ४,१०१.

गायत्री-बृहत्य (ती-अ)नुष्टुभ्- -ष्टुप्सु मीसू ५,३,१४.

गायत्री-माध्यन्दिन[a]- -नः बौश्रौ १६,१० : ७.

गायत्री-या( मन् >) म्नी- -म्नी[b] आपश्रौ ४,७,२.

गायत्री-शंसम् शांश्रौ १८,१६,१.

गायत्री-शत-पञ्चक- -कम् विध २२,१४.

गायत्री-संप(न्न>)न्ना- -न्नाः काश्रौ २२, ११, १७; लाश्रौ ९,४,३१.

गायत्री-सामन्- -म द्राश्रौ २, २, २४; लाश्रौ १, ६, २२; ६, १२, १४; निसू; -मनी लाश्रौ ७,२, १; निसू ७, ५ : २९; -मसु लाश्रौ ७, ६, ८; -मानि क्षुसू २, ९ : ४;७; -म्नोः लाश्रौ ६,१२,५.

गायत्रीसामा(म-आ)पन्न- -न्नम् निसू ७, १ : १८; ८,६:५०.

गायत्री-स्थान- -नम् निसू ७,८ : ८; ११ : ३२.

गायत्र्य(त्री-अ)ष्ट-शत- -तम् आग्निगृ ३, १२, १ : ४; अप ६७,८,२; शंध २२६; विध २२,१५.

गायत्र्य ( त्री-अ ) ष्ट-सहस्र- -स्रन् विध २२, १०; ६३; सुध २२; २५; २६;३५.

गायत्र्य(त्री-अ)मपत्ना- -त्नाः काश्रौ १७,११,६.

गायत्र्या( त्री-आ )दि- -दयः आपश्रौ १७,१०,५; -दि अशां १८,३; अअभू १-३; अप ११[२], ३, ४९; ऋप्रा १६, ११; -दिः ऋप्रा १८, ५; -दीनाम् उनिसू १: ६; -दीनि शुअ १,४.

गायत्र्यु( त्री-उ )त्तर[a]- -रः निसू ४,१० : ७.

गायत्र्यु ( त्री-उ )ष्णिग्-अनुष्टुब्-बृहती-पङ्क्ति- -ङ्क्तयः अअभू ३.

गायत्र्यु( त्री-उ )ष्णिग्-अनुष्टुब्-बृहती-पङ्क्ति-त्रिष्टुब्-जगत्य(ती-अ )तिजगती-शक्वर्य-(री-अ) तिशक्वर्य (री अ)ष्ट्य(ष्टि-अ)त्यष्टि-धृति-कृति-प्रकृत्या (ति-आ ) कृति-विकृति-संकृत्य ( ति-अ)भिकृत्यु(ति-उ )त्कृति- -ति अअभू १.

गायत्र्यु( त्री-उ ) ष्णिग्-अनुष्टुब्-बृहती-पङ्क्ति-त्रिष्टुब्-जगत्य( ती-अ )तिजगती-शक्वर्य-(री-अ)तिशक्वर्य (री-अ)ष्ट्य(ष्टि-अ)त्यष्टि-धृत्य( ति-अ )तिधृति- -तयः ऋअ १,३,२; शुअ ५,२.

गायत्र्यु ( त्री-उ ) ष्णिह्- -ष्णिहौ शांश्रौ ७,२७,३०.

गायत्र-काकुभ[c]- -भः ऋप्रा १८,६.

गायत्र-च्छन्दस्[a]- -न्दसः शांश्रौ १४, ३३, ८; ९; काश्रौ २५, १२, ५†; बौश्रौ; -न्दसम् काश्रौ १२,५, १६†; -न्दसा बौश्रौ २६, १५ :१०; १९;२८; द्राश्रौ; -†न्दाः शांश्रौ ६,८,१०; काश्रौ १३,१,११; आपश्रौ.

गायत्र- (नि>) णिधन- -नम् निसू ३,३ : २; -नानाम् निसू ३,३ : २६.

गायत्र-ता- -तया निसू १, १२ : ३.

गायत्र-त्रैष्टुभ-जागत- -ताः उनिसू १ : ३६.

गायत्र-धर्म- -र्मान् निसू २, ७ : २२.

गायत्र-पार्श्व[d]- -र्श्वम् द्राश्रौ ८, ४, १४; लाश्रौ ४, ८, १२; ८, ५,२०; २२; निसू ८,६ : ७.

गायत्र-बार्हत[c]- -तः ऋप्रा १८, ५.

गायत्र-वत्- -वान् निसू ३,५ : ११.

†गायत्र-वर्तनि[e]- -नि जैगृ १, ४:८; कौसू ५,७.

गायत्र-वैराज- -जौ ऋप्रा १७, ३७.

गायत्र-संहित- -ते क्षुसू १, ८ : १२; २,९ : ६.

गायत्र-संज्ञा- >°ज्ञित- -तम् जैश्रौका १०४.

*a*) विप.। बस.। *b*) पाभे. पृ १००८ m द्र.। *c*) मलो. कस. पूप. = प्रगाथ-। *d*) विप.> नाप.। बस.। *e*) वैप १ द्र।

गायत्रा(त्र-आ)महीयव– -वे क्षुसू २,९ : ४.

†गायत्रिन्[a]– -त्रिणः आश्रौ ७, ८, ३; शांश्रौ १८, ६,२; बौश्रौ.

गायत्री√कृ>०त्री-कारम् आश्रौ ७,२, १६; द्राश्रौ २, ४, १४.

गायन– पा ३, १, १४७[b]; –नम् काग ३,१७; अप ६८,५,१३.

गायन-प्रहास– -सैः अप ६८, ४,२.

गायमान– -नः आपश्रौ १२, ८, ५; बौश्रौ १४,१२ : २५; वैश्रौ.

†?गायिषे[a] आश्रौ ७,१२, ७; ऋप्रा १८,२.

गीत,ता– -तः निसू २, ८ : २९; नाशि १, ५, १३; १४; –तम् लाश्रौ ७, ७, ३३; ८, ५; निसू ३,८ : ६; पागृ; –ता आपश्रौ २१,२०, २[३]†; हिश्रौ १६,६, ३९†; बृदे ३, १५५; –तानाम् लाश्रौ १०, ९,८; निसू ६, ७ : ५४; अप ६४,४, २; –तानि शंध १०५; विध ५६, २७; –तायाम् हिश्रौ १२,७,६; –ते जैश्रौका १९३; पागृ २,७,४; –तौ नाशि १,५,१४.

गीत-क– -कम् अप ७०[३],३,३.

गीत-कारिन्– -री निसू ३, ८ : १७.

गीत-गान्धर्व-निस्वन– -नाः अप ७०[२],२,४.

गीत-नृत्य– -त्यम् अप ७०[२], ९, ३.

गीत-वादित-रुदिता(त-अ)ति-वात– -तेषु गोगृ ३,३,२७.

गीत-वादित्र-निर्घोष– -षः अप ६४,९,८.

गीत-वादित्र-निस्वन– -नाः अप ५८[२],४,१२;७१,१५,५.

गीत-वादित्र-शब्द– -ब्दाः अप ७१,२,२.

गीतिन्– -ती शैशि २०९; याशि २,८२.

गीति– -तिषु मीसू २,१,३४; –त्या क्षुसू ३, १०:४६; निसू २, ३ : ११; या ६,२४; १०,५.

गीति-तस्(:) निसू ५,५ : ६.

गीति-दोष– -षाः नाशि १, ३, ११;१२.

गीति-विकार– -रः लाश्रौ ७, १२,१.

गीत्वा जैश्रौका ३०; १७९; १९५; द्राश्रौ २,१,२६××; लाश्रौ.

गीयमान– -ने आपश्रौ ५, ११, ६; १३, ८; १५,६; बौश्रौ २,१७ : ३८; भाश्रौ.

गेय– -यम् जैश्रौका ४६; ८१××; लाश्रौ; –यानि जैश्रौ २४ : १; २;२६ : ९; जैश्रौका ८३;१०३; लाश्रौ ४,७,१.

गेया(य-आ)दि–निर्घोष—यु-क्त– -क्तैः आग्निगृ २,४,६ : ३९.

गेष्णु– पाउ ३,१६.

गैरायण– ३गिरि– द्र.

गैरिक–, गैरेय– प्रभृ. १गिरि– द्र.

गो[a,c]– पाउ २,६७; पाग ४,२,४९[d]; ५, १, २; गवा आश्रौ १२, ६, ३४; शांश्रौ ४,१७,१; १६,२२, १९; काश्रौ; गवाम् आश्रौ ९,९, १४; १२, ६, ३२; ३४; शांश्रौ ७,१७, १७××; काश्रौ; या ६, २; ९,२३†; २४†; गवि शांश्रौ ५, १०,१[२]; काश्रौ २५, २, ३; आपश्रौ१७,१८,१†;बौश्रौ; पावा ६,३,४५; †गवे शांश्रौ ९,२८, ५; १७,१२,३; आपश्रौ; गवोः माश्रौ ३,२, ११; ३, ६; वाश्रौ १, ५, ३, ५; अप्राय ४, ४; गाः आश्रौ १,७, ८; ४,१२,३; ८,१, ८; शांश्रौ ७, १८, २××; काश्रौ; माश्रौ ६,१,२,२६[e]; †या ६, २६; १४, २५६; गाम् आश्रौ ३, १०,०१३××; शांश्रौ; आपमं १,९, १०†[e]; हिगृ १, १८, ५†[e]; पावा १, ४, १; †गावः आश्रौ १, ७, ७[२]; ३, ११, ६; ४, ७, ४[f]; ५, ७, ५; शांश्रौ १, ११, १[२]; ५, १०, ८[f]××; काश्रौ; अअ ४,२१[२g]; या १, १७; २, ७; १७; ६, ५; ८; ३२; १०,२१; १२,७; १४, १४; १५६; †०गावः शांश्रौ ९,२८, ८××; आपश्रौ; गावा या ९,३९†; †गावौ काश्रौ ७, ८,१४; आपश्रौ ५, २०,११××; बौश्रौ; या ९, ३९; †गोः आश्रौ ३, ५, ९; ९, ८, ३××; शांश्रौ; या २, ६; ४, २५; ६,२; १९; २०; पा ४, ३, १४५××; गोनाम् शांश्रौ १२, १४, ३†; †गोभिः आश्रौ २, ११, ३; शांश्रौ ३, ७, ४; काश्रौ; या २,५××;†गोभ्यः शांश्रौ ९, २८, ५; बौश्रौ २८, १ : २; शांगृ; गोभ्याम् हिश्रौ ७,२,७०†; बृदे ५,३१; गोषु शांश्रौ १३, २९, १६; काश्रौ ४, १५,५; आपश्रौ;

*a*) वैप १ द्र. । *b*) नाप. । *c*) =स्तोम-विशेष- इत्यपीह द्र. । *d*) तु. पागम. । *e*) पाभे. वैप १,१२५० e द्र. । *f*) पाभे. वैप १,१८५५ h द्र. । *g*) सकृत् पाठः ? ।

द्राश्रौ ७, ३,४[1]†[a]; लाश्रौ ३, ३, ४[2]†[a]; †गौः आश्रौ १,७,७[2]××; शांश्रौ; वाश्रौ ३, २, २, १५?[b]; या १,१;१२;२,५φ;१४φ.

गव[c]– -वस्य अप ६८,२,१४.

गवां-व्रत[d]– -तम् द्राश्रौ १२,२,५; लाश्रौ ४, १०, ५; क्षुसू १,३ : १९;२२.

गवा(व-अ)ग्र– -ग्रे पावा ६,१,१२१.

गवा(व-आ)घ्रात– -तम् शंध ४३१; वैध २,१५,३.

गवा(व-अ)जिन– -नम् कागृ ५,९.

गवा(व-आ)दि-दक्षिणा– -णाम् वैगृ ३,२३ : १५.

गवादिदक्षिणा-करण– -णम् वैगृ ३,२३ : ६.

गवा(व-आ)धिपत्य– -त्यम् विध ९०,११.

गवा(व-अ)नुगमन– -नम् विध ५०, १६.

गवा(व-अ)नृत[e]– -ते वाध १६,३४; बौध १,१०,३५.

गवाम्-अयन– -नम् आश्रौ ११, ७,१;२०;१२,५,७; शांश्रौ १३, २८, १; काश्रौ २४, ४, ४९; आपश्रौ २१, २४,१; २३,१४, १०; २४,४,५; बौश्रौ; –नस्य आश्रौ १२, ५, १०; शांश्रौ १३, १९, १; १७; २४, १९φ; २५, ४; २७,५; २८,१; बौश्रौ; निसू १०,९ : ४φ; –नानाम् निसू १०, १३ : १४; –नानि बौश्रौ २४,५:१२†; –नाय काश्रौ १३, १, २[f]; –ने शांश्रौ १२, ९, ८; बौश्रौ २४, १०:१८××; लाश्रौ; –नेन आश्रौ १२,१,१;५,१२;६, २२; काश्रौ २४,५, २; आपश्रौ.

गावामयनिक– -कः काश्रौ २४, ३,१६.

गवाम् (अयन-) लाश्रौ १०, १३,१२.

गवामयन-न्याय– -येन लाश्रौ १०,३,१३.

गवामयन-पक्ष– -क्षयोः काश्रौ २४,५,९.

गवामयन-प्रकृति– -तीनि काश्रौ २४,४,२; हिश्रौ १८,१,२.

गवामयन-विकल्प– -ल्पाः काश्रौ २४, ७, २२; द्राश्रौ ८, १, १; लाश्रौ ४,५,१.

गवामयन-शस्य– -स्याः आश्रौ १२,५,१३;१४.

गवामयनो(न-उ)त्पाद[g]– -दौ निसू १०,१२ : ७.

गवा(व-आ)युस्– -युषी वैताश्रौ ३१,१४.

गवा(व-अ)र्थ– -र्थे शंध १४४; बौध २,२,७१; विध १६,१८.

गवा(व-अ)विक– पाग २,४,११.

†गवा(व-आ)शिर्[h]– -शिरः आश्रौ ७,६,२; हिश्रौ १२,६,६.

गवा(व-अ)श्व– पाग २, ४, ११; –श्वम् बृदे ५,६४; –श्वस्य वाध १७,४३.

गवाश्व-प्रभृति– -तिषु पावा २, ४,११; –तीनि पा २,४,११.

गवा(व-अ)श्वा(श्व-अ)ज-महिष-मण्डल– -लेषु वैगृ ५, १५ : १६.

गवा(व-अ)श्वा(श्व-अ)जा(जा-अ)विक-हस्ति-दासपुरुष-व्रीहि-यव-माष-तिल-दण्डो(ण्ड-उ)पानच्-छत्र-कमण्डलु-याना(न-आ)सन-शयनो(न-उ)पधान– -नैः बौगृ २,११,४४.

गवा(व-आ)ह्निक– -कम् शंध ३९०.

गवि(न्>)नी– पावाग ४,२,५१.

गवि(गो-इ)ष्[h]– -विषे आगृ १, १,४†.

†गवि(गो-इ)ष्टि[h]– -ष्टये[i] आश्रौ ३, १३,१२; आपश्रौ १९,२५,१२; –ष्टौ शांश्रौ ८,१६, १; शुप्रा ३, १२९[j]; अप्रा ३, १, १५; शौच २,२३.

गवि-ष्ठिर[,ल[k]][h]– पा ८,३,९५; पाग ४,१,१००;१०४; पावा ६,३,८; –रः शुप्रा ५,३,७†; –रम् अप्रा ३,४,१†; –रस्य[l] चाअ १६ : ३;१९; –राणाम्[m] आश्रौ १२, १४, १; आपश्रौ २४, ८, १२; बौश्रौप्र २९ : १; हिश्रौ २१,३, ११; वैध ४,५,३.

गाविष्ठिर[,ल[k]]– पा ४, १, १०४; –रः आश्रौ १२, १४,१; आपश्रौ २४,८,१२; बौश्रौप्र २९ : २; हिश्रौ २१,३,११; वैध ४,५, ३; –राः बौश्रौप्र २७ : ५.

गाविष्ठिलायन– पा ४, १,१००.

गविष्ठिर-वत् आपश्रौ २४, ८, १२; बौश्रौप्र २९ : २; हिश्रौ २१,३,११; बौध ४,५,३.

---

*a*) पाभे. वैप १,१२५३ a द्र.। *b*) पाठः ? गोः इति शोधः (तु. कौ १,४५८)। *c*) स्वार्थे अच् प्र. उसं. (पा ५,४,३८)। *d*) =साम-विशेष-। *e*) मलो. कस.। *f*) तु. चौसं.। *g*) विप.। बस.। *h*) वैप १ द्र.। *i*) पाभे. वैप १,१२५४ b द्र.। *j*) पाभे. वैप १,१२५४ d द्र.। *k*) तु. पागम.। *l*) °ष्टर° इति पाठः ? यनि. शोधः। *m*) बहु. < गाविष्ठिर–।

¹गवीडा[a]– -डाम् वैताश्रौ ७, २; ४३,६.

गवीडा(डा-आ)दि-श्रेष– -षे वैताश्रौ ७,२५.

गवे(व-इ)न्द्र– पा ६,१,१२४.

†गवे(गो-ए)षण[b]– -णः अप्रा ३,१, १५; -णे शौच २,२३.

√गव्य>†गव्यत्– -व्यता शांश्रौ १८, ९, ४; -व्यन्तः आश्रौ २, २०, ४²; शांश्रौ १४, ११, ८; ९; आपश्रौ.

¹गव्(व्य>)व्या[b]– -व्या साअ १,१८६†.

गव्यु[b]– -व्युः या ६,३१†.

²गव्य,व्या[c]– पा ४, २, ५०; ३, १६०; ५, १,२; ३९; पावा ४, १,८५; -व्यः वाधूश्रौ ४, ९६ : ५; अअ ९,७; -†व्यम् आश्रौ २,१०, ४; शांश्रौ १४, ११, ९; आपश्रौ १७, १८, १; बौश्रौ; -व्यस्य मीसू ८, १,१८[d]; -व्या या २,५²ф; -व्याः आपश्रौ १९, १६, १६; -व्यात् बौध १, ५, १३८; -व्यान् आपश्रौ २०,२२, ४; २१, २३, ४; १०; बौश्रौ; -व्यानि आपश्रौ २०, १२, २; बौश्रौ १५, ३७ : १२; बौगृ; -व्याम् शुअ १, १८५; -व्यायै बौश्रौ १५, २६ : १†[e]; -व्ये आश्रौ ४, ७, ४; बौध १, ५, १३९; ऋअ; शुप्रा २,२०[e]; -व्येन काश्रौसं ३६ : ९; कौगृ; २, १,४; शांगृ २, १, ५; कप्र; -व्यैः अप १,३०,२.

गव्य-घृत-पूर्ण–कुम्भ– -म्भेन विध ९०,३.

गव्य-मांस-तस्(:) अप ३६, १७,१.

गव्यूति[b]– पावा ६, १, ७९; -तिः अप्रा ३,४,१†; आपध १, १८, १; हिध १, ५, ७१; -तिम् बौश्रौ १८,२० : १९.

गो-अ(प्र>)प्रा[b]– -प्राः आश्रौ ९,११,१८†.

गो-अर्घ[b]– -र्घम् तैप्रा ११,१९†.

गो-अश्व– -श्वम् बौश्रौ ११, ६ : ३१; १२, ७ : ४२××; भागृ १, २७:८†; -श्वाः बौश्रौ २८, ६ : १५; वैश्रौ; -श्वानाम् आपश्रौ १९,६,८; हिश्रौ २३, १,१८.

गो-अश्वा(श्व-अ)वि-मिथुन– -नानि द्रागृ २,५,३.

गो-आयुस्[b]– -युर्भ्याम् आश्रौ १२, ६, २०![f]; काश्रौ २४, ७, १७; बौश्रौ २६, १६ : ३; १८; -युषः निसू ६, ३ : १६; -युषी आश्रौ ९, १, ४; ११, ९,११××; शांश्रौ; -युषोः द्राश्रौ ८,३,३५; लाश्रौ ४,७, १३; ८, १,१८; शुअ ४,१८५.

†गो-ऋजीक[h]– -कम् वाश्रौ ३,३, ३,१; ऋप्रा २,७४.

गो-ओप (श>) शा[b]– -शा ऋप्रा २,७४†.

गो-कङ्काला(ल-अ)भिरोहण– -णम् अप ३६,३,१.

गो-कर्ण–वत् वैश्रौ ११, ८ : १०; वैगृ १,२ : ६; नाशि १,६,१३.

गो-कर्णा(र्ण-आ)कृति–वत् आग्निगृ २,६,१ : ३.

गो-कुल– -ले अप ६६, ३,४; ७०², २३,९.

गोकुला(ल-अ)न्तिक– -के अप ६६,१,५.

गो-क्षीर– -रम् शंध ४१८; वैध २, १५,५.

गोक्षीर-कुमुद-प्रख्य– -ख्याः अप ५२, २,१.

गो-गजा(ज-अ)श्वा(श्व-आ)दि–पृष्ठ– -ष्ठेषु शंध १९२[g].

गो-गमन– -ने विध ५, ४२; ५३, ३.

गो-गामिन्– -मी शंध ३७७ : २२.

गो(गो-अ)ग्न्य(ग्नि-अ)र्थ– -र्थे गौध १२,२५.

गो-ग्रहण– -णे पावा ६,१,९३.

गो-ग्रास– -सम् कौगृ ३, १५, ७; शांगृ ३, १४,४; बौगृ २, ११, ५७; गोगृ ४,१,२०.

गो-घ्न[h]– पा ३,४, ७३[i]; -घ्नः शंध ३७५; ३७७ : २××; विध ४५, १९; -घ्नस्य सुध ३६.

गो-चर[j]– पा ३,३,११९; -रः अप ७०², २३, १०; वाध ६, ४२; -रम् वैश्रौ ३, ३ : ५; हिश्रौ १, २, १६; -राय आपश्रौ १, २,४.

गोचरा(र-आ)दि– -दीनाम् पावा ३,३,११९.

गो-चर्मन्– -र्म वैगृ ६, १ : ३[k];

---

*a*) =अग्निहोत्री-। व्यु. ?। *b*) वैप १ द्र.। *c*) वैप १ निर्दिष्टयोरिहैकत्र समावेशः द्र.। *d*) = गवामयन-। *e*) पाभे. वैप १,१२५५ d द्र.। *f*) °युषीभ्याम् इति पाठः? यनि. शोधः। *g*) °दिवृक्षेषु इति पाठः? यनि. शोधः (तु. स्मृतिचन्द्रिकायां श्राद्धकाण्डम् [पृ १४३])। *h*) उस. उप. कर्तरि कः प्र. (पावा ३,२,५)। *i*) = अतिथि-। संप्रदाने टक् प्र.। *j*) = व्रज-, विषय-। *k*) = प्रमाण-विशेष-।

गौपि १, ७, ५; -मैणा शंध ३९३.

गोचर्म-मात्र,त्रा- -त्रम् आग्निगृ १,७,१ : ५; २,४,५ : १३××; बौपि; -त्रा विध ५, १८३; -त्राम् अप १०, १, ८; विध ९२, ४; -त्रेण वाध २९, १६.

गोचर्ममात्रा (त्र-अ)धि-(क>)का- -काम् विध ५, १८१.

गोचर्ममात्रो(त्र-उ)पलिप्त- -प्ते वैगृ ६,१ : ३.

गो-चिति[a]- -तिम् आपश्रौ १७,४, ११; वैश्रौ १९, ५ : ११; हिश्रौ १२,१,४५.

? गोच्छगल[b]- -लाः बौपि २, ३, १४.

गो(गो-अ)ज- -जयोः काश्रौ १७, ५,१६.

गो-जा[c]- -जाः या १४,३१†.

गो(गो-अ)जा-महिषी-वर्जम् विध ५१,३८.

गो(गो-अ)जा(जा-अ)श्व-मृग-पक्षिन्- -क्षिषु अप ६४, ८, १०.

†गो-जित्[c]- -जित् आपश्रौ १६, १८,६; २१, ४,२, माश्रौ ६,१, ५, ३८; वैश्रौ.

गो-तर्पण- -णम् अप ४,६,५; ६९, ७,४.

गो-तृप्ति- -प्तिः बौध १, ५, ५७.

गोतृप्ति-कर- -रम् वैध ३,४,४.

गो-त्र,त्रा[c,d]- पाउ ४, १६७; पाग ८, १, २७; -त्रः अप ४८, १०१†; निघ १,१०†; -त्रम् आपश्रौ १७,२१,७†; बौश्रौप्र ५४ : १४; माश्रौ १,२,५, ४†; २,१, २, २३; ३,३, ६; हिश्रौ १२,६,२६†; आगृ ४,४,१०; कागृउ ४२ : २०; कौसू ४, २†; अप ४१, ५, २; वैध ४, १, २; चव्यू ४ : २५; याशि १, १८; पा ४, १, १६२; पावा ४, १, १६३; -त्रस्य अप्रा ३, ४, १†; पावा २, ४, ६२; ४, १,८९; -†त्रा आपश्रौ ३, १२, १; भाश्रौ ३, ११, १; हिश्रौ २,६, १४; अप ४८, ७२[e]; निघ १, १[e]; -त्राणाम् आपश्रौ २१, २, ५; ७; २४, ११, १५; १६; बौश्रौ; -त्राणि साअ २, १२०५; पिं ३,६६; -त्रात् वैश्रौ ६,५ : ३; हिश्रौ २,१, ५६; पा ४,१,९४; ३,८०; पावा; -त्राय वागृ ५,१३†; -त्रे वैध ४,१,२; पा २,४,६३;४,१,७८;८९;९३; ९८; २, १११; ८,३,९१; पावा ४,१,८९; ९३[?]; -त्रेण गोगृ २, ३,१३; ४, १०; अप ४१,६,५; आपध १, ६, ३०; हिध १, २, ५३; गौपि १, २, ७; ४, ९; द्राग्ृ १,४,५.

गौत्रक- पा ४,२,३९.

गोत्र-कल्प- -ल्पः जैगृ १,११ : २२.

गोत्र-क्षत्रिया (य-आख्या>)ख्य- -ख्येभ्यः पा ४, ३, ९९; पावा ४,२,१०४.

गोत्र-ग्रहणा(ण-आ)नर्थक्य- -क्यम् पावा ४,१,१६३.

गोत्र-चरण- -णात् पा ४, ३, १२६; ५, १, १३४; पावा ४, २,१०४.

गोत्र-ज- -जैः शंध २८०.

गोत्र-तस्(:) शंध ३६१; ३६६.

गोत्र-नामन्- -म वैगृ १,७ : ८; कप्र ३,३, २; -मभिः कप्र १, २,७; -मानि शांगृ १,६,४.

गोत्रनाम-पूर्व- -र्वम् वैगृ ५,६ : ११.

गोत्रनाम-युक्त- -क्तम् वैगृ ३,१९ : ७.

गोत्रनामा(म-आ)दि- -दिना वैगृ ५,१३ : १५.

गोत्रनामा(म-अ)नुवादा(द-अ)न्त- -न्ते कप्र ३,३,२.

गोत्र-पूर्व- -र्वम् वैश्रौ १२, १० : १०.

गोत्र-प्रकृति- -तौ पावा ८, ३, ९१.

गोत्र-भाग-विभागा (ग—अ)र्थ- -र्थे शंध २८०.

गोत्र-भाज्- -भाजः बौध २,२,३२; गौध २८,३४.

गोत्र-भाव- -वे पावा ४, १, ९६.

†गोत्र-भिद्[c]- -भित् बौश्रौ १०, २४ : ११.

गोत्र-मूल- -लानि बौश्रौप्र ५४: १८.

गोत्र-मैथुन[f]- -नः बौपि ३, ४, १६.

गोत्र-वचन- -नम् पावा ५, ३, ११८.

गोत्र-संज्ञा- -ज्ञायाम् पावा ४, १, १६२.

---

*a*) मलो. कस. । *b*) पाठः? गौः, छ॰ इति द्विपदः शोधः (तु. बौपि १,२ : १४,R. च) । *c*) वैप १ इ. । *d*) नाप. (अपत्यसामान्य-, पौत्र-प्रभृति- [पा.]) इतीह विशेषः । *e*) = पृथिवी- । *f*) विप. । बस. ।

गोत्र-स्त्री- -स्त्रियाः पा ४, १, १४७.

गोत्रा(त्र-आ)ङ्गिरस-वासिष्ठ[a,b]- -ष्ठम् अप ३,३,६.

गोत्रा(त्र-आ)दि- -दिषु पावा ८, १, २७; -दीनि पा ८, १, २७.

गोत्रादि-ग्रहण- -णे पावा ८,१,२७.

गोत्रा(त्र-अ)न्त- -न्तात् पावा १,१,७३.

गोत्रा(त्र-अ)न्तेवासि-मानव-ब्राह्मण- -णेषु पा ६,२,६९.

गोत्रा(त्र-अ)वयव- -वात् पा, पावा ४,१,७९.

गोत्रा(त्र-आ)श्रय[a]- -यम् गोगृ २,१०,२१.

गोत्रिन्- -त्रिणः अप्राय ३,७.

गोत्रो(त्र-उ)त्तरपद- -दस्य पावा १,१,७३.

गोत्रो(त्र-उ)त्पन्न- -न्नात् वैध ३,११,३.

गो-त्व-वत् मीसू ६, ३, १२; ८, ३,१८.

गो-दक्षि(णा>)ण[a]- -णः बौश्रौ १३, १:१८; २४,२९:१०.

गो-दक्षिणा- -णाम् कौसू ६३, २७.

गो-दशक- -कस्य विध ८,१७.

१गो-दान- -नेन विध ९०,१४.

गोदान-फल- -लम् विध ५९, १५; ९१,१७.

गोदान-सम- -मम् विध ६७, ४६[c].

गो-दुह्[d]- -दुहे माश्रौ १, १, ३, १६; -धुक् हिश्रौ १, ३, ३९; या ११,४३†; -†०धुक् आश्रौ ४, ७, ४[e]; शांश्रौ ५, १०, १०; आपश्रौ.

गो-देव-गृह-वासिन्- -सी आग्निगृ २,७,११ : १५.

गो-दोह- -हात् कौगृ ३,१०,२१.

गोदोह-मात्र[a]- -त्रम् शंध १३२.

१गो-दोहन- > °न-काल-मात्र- -त्रम् वैध ३,७,१.

गोदोहन-मात्र[a]- -त्रम् शंध १३३; बौध २,१०,४४.

२गो-दोहन[f]- -नः पावा ३, ३, १२३; -नेन आपश्रौ १, १६,३; भाश्रौ १, १७,१२; माश्रौ १,२, १,८; वैश्रौ ४,२ : ९.

गोदोहनी- -नीम् बौश्रौ ९, ५ : २;१४;३०.

गोदोहन-संनेजन- -नेन हिश्रौ ३,७,३२.

गो-द्विजोत्तम- -मौ शंध ४११.

गो-धायस्[d]- -यसम् भाशि ४७†.

गो-धेनु- -न्वाः अप १,५०,५[g].

गो-नाम[d]- -मेषु मागृ १,४,१२.

गो-नामन्- -म कौसू २७, २१; या ४,१९; -मभिः हिश्रौ ९, ८, ४८; द्राश्रौ ९, २, ३; लाश्रौ ३, ६, ३; गोगृ; -मसु कप्र ३, ६,५[2]; -मानि लाश्रौ ९,६,१७; मागृ १, ४, १५; निघ २, ११; या ३,९.

गो-निर्हार-मुक्त[h]- -क्तानाम् विध ४८,१६[i].

गो-निष्काल-प्रवेश- -शयोः कप्र १,५,६.

गो-निष्क्रान्त- -न्तानाम् बौध ३, ६,२०[i].

गो-न्यास-प्रमृदित- -तानाम् बौश्रौ २२,१७ : १६.

२गो-प[j]- > गोप-शौण्डिक-शैलूष-रजक-व्याध-स्त्री- -स्त्रीणाम् विध ६, ३७.

गो-पक्ष[a,k]- -क्षः काश्रौ २३, ५, २९.

गो-पक्षि-शब्द-वृद्धि- -द्धिः अप ६४,९,२.

†गो-पति[d]- -तये आपश्रौ ४,३,६; भाश्रौ ४, ५, ४; हिश्रौ; -तिः आश्रौ २,५,१७; ८,२,२१;१२, २०; शांश्रौ; -तिना अप १६,१, १३; -तिम् आश्रौ ६, ४, १०; शांश्रौ ९, १३,१; १८, ७, १५; आपश्रौ १, १३, ११; भाश्रौ; -तेः कौगृ ३, ५,४?[l]; शांगृ ३, ९,१; -तौ आश्रौ ३, ११,६[m]; आपश्रौ १,२,९; बौश्रौ.

†गौपत्य[d]- -त्यः गोगृ ४, ५, १७[n]; -त्यम् बौश्रौ ७,१४:२३; १४, ५ : २७; -त्येन शांश्रौ २, १२,१; बौश्रौ ३,८ : २४; १३ : १४.

गो-पद[o]- -दे बौगृ २,१,८[p].

गोपद-मा(त्र>)त्री[q]- -त्रीम् आपश्रौ ७,५,१.

---

*a*) विप. । बस. । *b*) गोत्र-इत्यस्य पूर्वनिपातः उसं. (पा २, २, ३७) । *c*) गोप्रदा° इति जीसं. । *d*) वैप १ द्र. । *e*) तु. आन. । *f*) = पात्र-विशेष- । कास. उप. अधिकरणे ल्युट् प्र. । *g*) निर्विसर्गः पाठः? यनि. शोधः । *h*) षम.>तृस. पूप. = गोमय- । *i*) सप्र. °मुक्तानाम् <> °निष्क्रान्तानाम् इति पाभे. । *j*) = जाति-विशेष- । *k*) पूप. = गो ष्टोम- । *l*) °ते इति पाठः ? यनि. शोधः । *m*) पाभे. वैप १,१२५७ p द्र. । *n*) विप. प्राग्दीव्यतीयः ण्यः प्र. (पा ४,१,८५) । *o*) = गोष्ठ- । *p*) सप्र. गोपदे <> गोष्ठे इति पाभे. । *q*) पूप. = गोशफ- ।

८४; -†जाः बौश्रौ १, ११ : ४; भाश्रौ २,१,१; याशि २, ८.

†तिग्म-शृङ्ग[a]- -ङ्गः आश्रौ ७,५, २०××; शांश्रौ.

तिग्मा(ग्म-आ)युध[a]- -धाय या १०,६†ф.

तिग्मे(ग्म-इ)षु[a]- -षवः या १०, ३०†.

तिजिल- पाउ १,५६.

तितिक्ष[b]-(>तैतिक्ष्य-[>१तैतिक्ष-] पा.) पाग ४,१,१०५; २, १११.

तितिक्षा- पाग ४, ४, ६२; -क्षा वाधूश्रौ ३,१ : ८; विध ९९,५; -क्षायाम् पा १,२,२०.

२तैतिक्ष- पा ४,४,६२.

१तीक्ष्ण,क्ष्णा[a]- पाउ३,१८; -क्ष्णः अप ३६, २, ६; ६८, १, ११; काशु; -क्ष्णम् अप ३६, १६, १××; आपध; -क्ष्णा काश्रौ १६, २,५; वाधूश्रौ ४,१५:२; -क्ष्णाः सु ८, ३; -क्ष्णाम् माश्रौ ६,१, १, ८; वाधूश्रौ ४, १५ : ४; -†क्ष्णाय अप ३६,९,१५; ६६, २, ६; ३, २; गौध २६,१२; -क्ष्णे वैश्रौ १०,१ : १०.

तीक्ष्ण-काष्ठ- -ष्ठेन बौध ३,२,३.

तीक्ष्ण-तैल[c]- -लम् अप ३६, ३०,१.

तीक्ष्ण-दीप्ति-प्रकाश—त्व- -त्वात् नाशि १,५,१५.

तीक्ष्ण-दंष्ट्र[d]- -ष्ट्राय अप ३६, ९,१५†.

तीक्ष्ण-रूप- >°पिन्- -पिणे गौध २६,१२†.

तीक्ष्ण-शूल-विशाला (ल-अग्र>)ग्रा[e]- -ग्रा अप ५८[2], २, ३.

तीक्ष्ण-स्वर- -रेण अप ७०[3], ६, ८.

तीक्ष्णा(क्ष्ण-अ)ग्र[d]- -ग्राः शंध ३७४.

तीक्ष्णा(क्ष्ण-अन्त>)न्ता[d]- -न्ताः कप्र २,८,२.

तीक्ष्णा(क्ष्ण-अ)र्थ[d]-त्व- -त्वात् काश्रौ ८,२,१७.

तीक्ष्णा(क्ष्ण-अ)सृग्-विष—युक्त[f]- -क्तानाम् अप ३६, २,५.

तीक्ष्णी√कृ>°क्ष्णी-करण- -णम् वैगृ ३,२३ : ५.

तीक्ष्णी-कृत्य वैश्रौ ४,११:७.

तीक्ष्णीयस्[e]- -यसी निसू ३, १३ : २७.

तेक्ष्णिष्ठ[g]- -ष्ठम् आपश्रौ २१, १२,३†.

२तीक्ष्ण[b]-(>तैक्ष्णायन- पा.) पाग ४,१,११०.

†तेज[a]->†तेजिष्ठ,ष्ठा[a]- -ष्ठस्य वाश्रौ १,३,२,१४; -ष्ठा आपश्रौ ४,६, ४; माश्रौ ४, ९, २; वैश्रौ ५, ७ : २; हिश्रौ ६, २, १५; -ष्ठेन आपश्रौ २,४, १०; १६, ३२,५; बौश्रौ १,१२ : ३; भाश्रौ २,४,११; वैश्रौ १८,१६ : ४६; हिश्रौ ११,८,११.

तेजीयस्- -यसा बौश्रौ १३,५ : १४†.

तेजन[a]- पाग ४, १, ४१; -†नम् आपश्रौ १४,२९,३; हिश्रौ १५, १,१६; आग्निगृ ३, ७,१ : १४; बौपि १७ : १३.

तेजनी[a]- पा ४, १,४१; -नी हिश्रौ ७,५,२५; लाश्रौ ९, २, २७; -नीः आपश्रौ ११, ८, २;२१,१२,९; हिश्रौ ७,५,२७[h]; ७,२१; -नीभिः हिश्रौ १६, ५, ३; -नीम् काश्रौ २१, ३, २६; वाधूश्रौ; -नीषु वागृ १०, १३; -न्याम् माश्रौ २,२,२,२९;३१; वागृ १४,५.

तेजनि-संघात- -ते हिश्रौ १६,६,३३[i].

तेजन्य(नी-अ)न्त- -न्तौ माश्रौ २,२, २,३०.

तैजन[a]- -नः आपश्रौ १७, १४,८†; -ने वाश्रौ ३,४,५,९.

तैजनी- > °नि-त्वच्[j]- -†त्वक् द्राश्रौ ११,२, ९; लाश्रौ ४,२,८.

तेजन-संघात- -ते आपश्रौ २१, १८,५[i].

तेजस्[a]- -जः †आश्रौ २, ३,४××; शांश्रौ; आपश्रौ १०, २८, ५[k]; -जसः पागृ २,६,२९; बृदे १, ९८; या १४, ५; -जसा आश्रौ ३,१४,१३; काश्रौ; आपश्रौ ८, ४, २[l]; माश्रौ ६, १,८,१०†[m]; -जसाम् वाश्रौ १,१, २, ३†; -जसि शांश्रौ १५, ४, ४; बौश्रौ

---

a) वैप १ द्र. । b) = ऋषि-विशेष- । व्यु. ? । c) पूप. = कृष्ण-सर्षप- । d) विप. । बस. । e) विप. । कस.>बस.>कस. । f) कस.> मलो. कस.>तृस. । g) वैप २, ३खं. द्र. । h) = यष्टि- इति गोपीनाथः । i) सप्र. °निसंघाते<>°नसंघाते इति पाभे. । j) विप. । बस. पूप. ह्रस्वः । k) पाभे. वैप २, ३खं. तेजः तैब्रा ३,७,७,१३ टि. द्र. । l) पाभे. वैप २, ३खं. तेजसा तैब्रा १,५,५,१ टि. द्र. । m) पाभे. वैप १, १४७६ i द्र. ।

२०,२ : १७†; माश्रौ १,७,२, २३†[a]; -जसे आश्रौ ५, १३, १२; शांश्रौ; आपश्रौ १९, ९, १३†[b]; आपमं २, ८, ११†[c]; -जांसि अप ५८[२],२,९;-जोभिः कप्र ३,१,१५.

तैजस[d]- -सः या १२, ३७[e]; -सम् बौध १, ५,२२; या १४, ७; -सानाम् शंध १७९; बौध १,५,२६;६,३५: विध ९२,१५; सुधप ८७ : १६; -सानि विध ७९,१४; २२; ८७,६; -सैः बृदे १, ८८.

तैजस-द्रव्य-संभ(व>) वा- -वा कप्र २,५, १०.

तैजस-मार्तिक-दारव-तान्तव- -वानाम् गौध १, ३१.

तैजस-मृन्मय-दारव-तान्तव- -वानाम् वाध ३,४९.

तैजस-वत् वाध ३, ५०; बौध १,५,३८; गौध १,३२.

तैजसा(स-अ)पहारिन्- -री शंध ३७६; ३७७ : १.

तैजसा(स-अ)श्ममय-मृन्मय- -येषु आगृ ४,७,१०.

तेज-आदि- -दि आपश्रौ २,६,४.

तेजसस्-काय- -यम् आपध १, २२,६[f].

तेजस्-काम- -मः शांश्रौ १४, ४,१××; काश्रौ; -मम् बौगृ २, ५,५; आपध १,१,२३; हिध १, १,२३; -मस्य शांश्रौ १५,४,२; आपश्रौ; -माः बौश्रौ ३, १४ : ९; -मानि शांश्रौ १४, ७८,२.

तेजस्-कामिन्- -मी आग्निगृ २, ४,११ : २४.

तेजस्-काय- -यम् हिध १, ६,६[f].

तेजस्-त्व- -त्वात् मीसू ८, १, ३५.

†तेज(स्य>)स्या[g]- -स्या बौश्रौ १३, ३४ : ५; -स्याः आपश्रौ १८, १३, १७; बौश्रौ १२, ८ : १५; हिश्रौ १३,५,१४.

†तेजस्-वत्- -वत् आपश्रौ २२, २६, ३; बौश्रौ १८, ९ : ५[h]; हिश्रौ; -वते आपश्रौ २२,२६, २; बौश्रौ १३,५ : १२; १४, ११:४[h];५[h]××; हिश्रौ; -वन्तम् आपश्रौ २२, २६, २; बौश्रौ; -वान् बौश्रौ १८,९ : ६; माश्रौ.

तेजस्-विन्- -वि अप १,९, ४; -†°विन्[i] आपश्रौ १३,८,९; बौश्रौ १४, ११ : ६; वैश्रौ १६, ९ : १४; हिश्रौ ९, २, ३२; -विनम् अप ३,१, १३; -विना अप १८[३],१,११; -†वी आपश्रौ ६,२३,१; १९,१४, १३; बौश्रौ ७,१३ : २६; १४,११ : ६[j]××; हिश्रौ ६,६,२६; ९,२, ३२[j]××; पागृ.

तेजस्विनी- -°नि मागृ २,१४,३०; -नीः हिश्रौ ११,८, ११.

तेजस्वि-तम- -मः कागृ ५९, ५.

†तेजः-सद्[g]- -सत् आपश्रौ १६,२९,२; वैश्रौ १८, २०:२८; हिश्रौ ११,८,४.

तेजो-दा[g]- -दाः अप्राय ६,३†.

तेजो-धातु-मय- -याः अप ५२, १२,५.

तेजो-बल- -लेन सु २४,१.

तेजो-ब्रह्मवर्चस-पुरोधा-काम- -मस्य काश्रौ २२,५,११.

तेजो-मय- -यः शुअ ४, २१९. -येन बौगृ १,२,१४.

तेजो-मूर्ति- -र्तिः वैश्रौ २,६:९,

तेजो-रूप- -पम् शंध १२३.

†?तेजोवत्सव[k]: वैगृ २,१४ : ३; वैध २,२,२.

†तेजो-विद्[g]- -वित् आपश्रौ १३,८,९; बौश्रौ १४, ११ : ८; वैश्रौ १६,१० : १.

तेजो-विशेष- -षेण आपध २, १३, ८; हिध २,३,७.

तेजो-व्रत[l]- -तम् कौसू १८,२३; अप १८,१४,१.

†तेतिजान[m]- -नः बौश्रौ ४, १ : २६; भाश्रौ ७,२,४.

**तितउ**[g]- पाउ ५,५२; -उ अप ४८, ११६†; निघ ४, १†; या ४ ९ϕ; -उना या ४, १०; ऋप्रा २, १३†; -उनि कौसू २६, २-३१; ३०,१७.

तितउ-प्रश्न[n]- -श्नौ कौसू २६, ३;५.

**तितनिषु-** √तन् द्र.

**तितिक्ष-**, °क्षा- √तिज् द्र.

---

*a*) पाभे. पृ ११७० l टि. द्र.। *b*) पाभे. वैप १,१४७७ e द्र.। *c*) पाभे. पृ ४६७ j द्र.। *d*) विप.। स्वार्थे विकारार्थे वा अण् प्र.। *e*) = (स्वप्नावस्थायाम्) आत्म-स्वरूप-। *f*) सप्र. जसस्का° <> °जस्का° इति पाभे.। *g*) वैप १ द्र.। *h*) पाभे. वैप १,६९० h द्र.। *i*) पाभे. वैप १,६८९ d द्र.। *j*) पाभे. वैप १,६९० q द्र.। *k*) पाठः ? (तु. संस्कर्तुः टि.)। *l*) = घृताशन- (तु. दारिलः)। *m*) पाभे. वैप १, १४७४ n द्र.। *n*) द्वस. उप. = उष्णीष- वा इण्ड्व- वा।

**तितिम्भ**[a]– (>तैतिम्भ्य– पा.) पाग ४,१,१०५.

**१तित्तिर**[b]– -रम् शंध २२३.

१तैत्तिर– -रम् आगृ १,१६, ३; कौगृ १,१९,३; शांगृ १,२७,३; –रेण आपगृ १६,२.

**२तित्तिर**[c]– -राय[d] आग्निगृ १,२,२ : २८; हिगृ २,२०,१[e].

**१तित्तिरि**[f]– पाउवृ ४, १४३; –रिः विध ४४, २६; या ३, १८; शुप्रा ३, ८१†[g]; –रिम् विध ५०, ३७; –रीन् आपश्रौ २०, १४,५†[h].

तित्तिरि-कपिञ्जल-लावक-वर्तिका-मयूर-वर्जम् विध ५१,३१.

तित्तिरि-कपोत-कपिञ्जल-वार्ध्राणस-मयूर-वारण– -णाः बौध १, ५, १३३.

**२तित्तिरि**[f]– पाग ४, १,१०५[i]; २, १११; –रये[d] बौगृ ३,९,६; भागृ ३,११ : १; –रिः बृदे ६,१५१.

तैत्तिरीय[j]– पा ४,३,१०२; –याः बौश्रौप्र ९ : २; निसू ९,३ :१९; २५; नाशि १,१,११; –याणाम् तैप्रा २३,१८.

तैत्तिरीयक[k]– -काः चव्यू २ : १३; तैप्रा २३,१७.

तैत्तिरीय-ब्राह्मण– -णम् अप्राय ६,८.

तैत्तिरीया( य-आ )ह्वरक– -केषु नाशि १,१,९.

तैत्तिर्य– पा ४,१,१०५.

२तैत्तिर– पा ४,२,१११.

**तितीरिषत्**–, °तीर्षत्–, °र्षमाण–, °र्षा– √तृ द्र.

**तिथ**– पाउ २,१२.

**तिथि**[l]– पाउभो २,१,२०३; –थयः शंध ११५; आज्यो ६, ८; ११; –थये गोगृ २, ८, १२; –थिः अप २, ५, ५; ३५.१, ४; बौध; –थिम् मागृ १, १०, ९; २,२, १५; वागृ; –थिषु या ४, ५; –थेः कागृउ ४४ : ८; आज्यो ७,१३;१७;२१; –थौ शांगृ ५, २,२; अप २२,१,४; ३१,५,१; आज्यो ७,४.

?तिथि-ऋक्षाद्य्-अयोगतस(:)[m] अप ३६,२,१.

तिथि-करण-मुहूर्त-नक्षत्र-ग्रहा(ह–आ)दि– -दीनाम् अप ७२,३,६.

तिथि-छिद्र– -द्राणि अप ३१,५,१; –द्रेषु अप ३१,८,६.

तिथि-ज्ञ– -ज्ञाः आज्यो ६,१३.

तिथि-देवता– -ताः कप्र ३,६, ९; –ताम् मागृ १,१०,९;२,२,१५.

तिथि-द्रव्य-ब्राह्मण–संयोग– -गे अप ४४,१,६.

तिथि-नक्षत्र– -त्रम् वेज्यो २०.

तिथि-नक्षत्र-करण-मुहूर्त– -र्तेन आज्यो ७,१२.

तिथि-नक्षत्र-पर्व–समवाय– -ये गोगृ १,१,१३.

तिथि-निष्ठा– -ष्ठाम् वेज्यो २२.

तिथि-भा(भ–आ)दान–>°दानि-(क>)का[n]– -काः वेज्यो २१.

तिथि-वारा(र–आ)दि– -दिभिः बौपि २,१०,७.

तिथि-विचक्षण– -णः आज्यो ७,४.

**तिथ्विक**– (>तैथ्विक्य– पा.) पाग ५,१,१२८.

**तिनिश**– पाउभो २,३,१४७.

**तिन्तिडीक**[o]– पाउ ४,२०.

**तिन्त्रिणीक**– पाउना ४,२०.

**तिन्दुक**[p]– पाउभो २,२,२२.

तिन्दुक-ज्योतिस्[1]– (>°तिषीय–पा.) पाग ५,३,१०६.

**√ति⌊,ते⌋प्** पाधा. भ्वा. आत्म. क्षरणे.

**√तिम्** पाधा. दिवा. पर. आर्द्रीभावे.

**तिमि**[q]– पाउ ४,१२२; पाग ८,२, ९[1].

तिमिं-गिल[q,r]– पावा ६,३,६९.

तिमि-मत्– पा ८,२,९.

**तिमिर**[s]– पाउ १, ५१; पाग २,४, ३१; पावाग ८, ४, ३९[p,t].

तिमिर-मकर-नग-नाग-नक्र-ग्राह-शिंशुमार-शङ्ख-द्रुम-कूर्मो(र्म-उ)र्मि-झष-महिष-वराह-दिग्द्विरद-नव-कुमुद-खण्डाकृति-नल-कलश-कुड्मलापीड-तोरणा(ण-आ)वर्त-स्वस्तिक-वर्धमान-रवीह्वरजतम-

a) तु. पागम. । व्यप. । व्यु. ? । b) = पक्षि-विशेष- । व्यु. ? । c) = ऋषि-विशेष- । व्यु. ? । d) सपा. °राय<>°रये इति पाभे. । e) °रायो° इति पाठः ? °रये उ° इति शोधः (तु. Böht ⌊ZDMG ५२, ८८⌋) । f) वैप १ द्र. । g) पाभे. वैप १, १४७८ k द्र. । h) पासे. वैप १,१४७८ l द्र. । i) तु. पागम. । j) = शाखाध्यायिन्- । k) = तैत्तिरीयाम्नाय- । तस्येदमीयः वुञ् प्र. (पा ४, ३,१२६) । l) = काल-विशेष- । व्यु. ? । <√तन् इति पाउभो., <√अत् इति ऋभा. । m) पाठः (तु. संस्कर्तुः सूची) ? °क्षा(क्ष–आ)द्य–यो° इति शोधः विमृश्यः । n) मत्वर्थे ठन् प्र. । o) तित्तिडीक– इति पाम ४, ३,१५६ । p) = वृक्ष-विशेष- । व्यु. ? । q) = मत्स्य-विशेष- । व्यु. ? । r) उस. उप. कः प्र. । s) बप्रा. । व्यु. ? । t) = पावाग ८,४,६ । तिमिरा– इति भाण्डा. पासि., तिमिरिका– इति पाका. ।

द्राणिपताकाशिवताख्या-स्थान-विविध-जलचर-पक्षि-विरुत-चतुष्पदा(द–आ)कार[a]– -रेषु अप ६५,१,४.

तिमिर,रा-वन– पावा८, ४,३९.

तिमिरिका-वन– तिमिर– टि. द्र.

**तिर्[b]–** > तिर्√अच् > तिर (र्-अ)-च्– -रक् बौश्रौ २५,३ :३†[c].

**१तिरश्ची[d]–** -श्चीः ऋअ २, ८,९५; साअ १,३४९;३५०; –†श्च्याः आश्रौ ७,८, ३; शांश्रौ १२,२६, ६.

तैरश्च्य[e]– -श्च्यम् क्षुसू २, १५ : २४; निसू ५, ७ : २७;८,४ : २१;२३;८ : ३२.

तैरश्च्य( श्च्य-ऋ )र्च्– -र्क्षु लाश्रौ ६,८,१२.

तैरश्च्यो(श्च्य-उ)त्त(म>)मा– -मायाम् लाश्रौ ६, ८, १२.

तिरश्ची-श्रुतान– -नौ अअ २०, १३७.

**२तिरश्ची–**, °चीन– तिरस् द्र.

**?तिरश्चीनर्थे[f]** कौसू १२४,४.

**तिरस्[d](:)** पाउना ४, २२४; †आश्रौ १,२,७; २,५,७; शांश्रौ ८,२४, ११†;†आपश्रौ ६,२५,२;९,१२, ४[g];१४,२२,३[g]; बौश्रौ;†भाश्रौ ३, १०,२[g]; ६, ५,५; आपमं २, २२, २४†[g]; आग्निगृ ३, ७,२:३†[g]; बौपि१,१७:२४[g]†; कौसू ७२,२†[g]; निघ ३,२९†; या ३, २०†ф;५,४†;५†;१२, ३२; पा १,४, ७१; पाग १,१, ३७; ३,१,२७.

तिरः-पवित्र[h]– -त्रम् आपश्रौ १, १३, ६; १४, ३†; बौश्रौ १,३ : ३१; ४ : २१××; भाश्रौ; हिगृ १, १,२४[i].

तिरश्-चर्मन्[j]– -र्मन् बौश्रौ ६,२८: ४५; ७,५,१९; ८,१,११; २५, २२,६.

तिरस्√कृ>°कृत्य काश्रौ ६, १, १२; बौध १,५,६८; पा १, ४, ७२.

√तिरस्य पा ३,१,२७.

तिरो-अह्नियु[d]– -यस्य बौश्रौ १७, १० : १७†; –याः तैप्रा ११, १७†[k]; –यान् आपश्रौ १४,४, ८†[l]; बौश्रौ १७, १० : १३†[l]; वैश्रौ २१,१५:९; हिश्रौ ९,७, ५३[k]†; १५, ७, १०; –यानाम् आपश्रौ १४, ४, ७[२]†[m]; बौश्रौ १७, १० : १०†[m] ; २३, १३ : ३०; ३२; हिश्रौ ९, ७, ५३[m]; –येभ्यः काश्रौ २०, ८, १४.

तिरो-अह्न्य[d]– -ह्न्यस्य द्राश्रौ ६,३, १८; लाश्रौ २,११,१२; –ह्न्यान् माश्रौ २,५,३,२४†[l];–ह्न्यानाम् आश्रौ ६, ५, २४†[m]; शांश्रौ ९, २०,३१†[m]; काश्रौ १२, ६,१३; माश्रौ २, ५, ३, २३†[m]; –†ह्न्यासः आश्रौ ६, ५, २४ ; शांश्रौ ९, २०, ३०; –ह्न्येषु आपश्रौ १४, २८,२.

तैरोअह्न्य[n]– -ह्न्ये आश्रौ ५, ५,२०[o].

तिरोअह्न्या(ह्न्य-आ)दि– -दि काश्रौ २४,३,३८.

तिरो(रस्√अ)च् > तिरश्-च्[d]– -रश्चः काश्रौ १८, ६, ७; अप्राय ४,४; –रश्चा या ६,२०†.

२तिरश्ची– -श्ची आश्रौ ८,१४,४†; शांश्रौ ४, १८,१†; काश्रौ २,८,५; आपश्रौ १६,१४, ६; बौश्रौ; द्राश्रौ १०, ४, ७†[p]; लाश्रौ ३,१२,६†[p]; –श्चीः बौश्रौ ५,६ : ६; माश्रौ १, २, ५, २; हिश्रौ १,७,३; –श्चीम् आपश्रौ २, १, २; बौश्रौ; –श्चीषु काश्रौ १७, १,१३; –श्च्यौ काश्रौ १७, १,१०; ४,१४.

तिरश्चि(क>)का[q]– -काः आश्रौ १,२,१.

तिरश्चीन,ना[d]– -नः शुअ ३, २३६†; –नम् भाश्रौ ७,१४,९; वैश्रौ ६, ८ : ५; –नाः कौसू १३१,२.

तिरश्चीन-निधन[e]– -नम् लाश्रौ ६, ११,४.

तिरश्चीन-संनद्ध– -द्धम् वाधूश्रौ ३,७५ : ६;८.

---

*a*) द्वस. > बस. । पूप. = जल-जन्तु- । *b*) तिरस् > यनि. । *c*) सपा. तै १,१,२,१ तैब्रा ३, २, २,५ आपश्रौ १, ३, १२ **तिर्यक्** इति पाभे. । *d*) वैप १ द्र. । *e*) = साम-विशेष- । *f*) पाठः? **तिरश्चीनं यत्** इति Web. शोधः (तु. संस्कर्तुः टि.) । *g*) पाभे. वैप १, १४७९ a द्र. । *h*) वैप २, ३खं. द्र. । *i*) Böht [ZDMG ५२, ८१] पद-द्वयम् इति (तु. ऋ १, १३५, ६) । *j*) अस. टजभावपक्षः (पा ५,४,१०९) । *k*) पाभे. वैप १, १४७९ c द्र. । *l*) सपा. °ह्नियान् <> °ह्न्यान् इति पाभे. । *m*) सप्र. °ह्नियानाम् <> °ह्न्यानाम् इति पाभे. । *n*) विप. (आश्विन- [अतिरात्र-] ) । स्वार्थे अण् प्र. । *o*) **चेतरो अह्न्ये** इति पाठः? यनि. शोधः (तु. आन.) । *p*) सपा. शौ १५,३,५ °श्च्ये इति पाभे. । *q*) नाप. । स्वार्थे कः प्र. ह्रस्वश्च ।

तिरश्चीना(न-अ)म्र,म्रा[a]– -म्रान् बौश्रौ ९, १५ : २१; –म्राम् बौश्रौ ९, १५ : २३; –म्रौ बौश्रौ ९,१५ : १०.

तिर(स्>)श्-च-[b]>°श्च-ता- -ता[c] सु २३,१.

तिरश्च-राजि[b]– -जिः[d] आपमं २,१७,१७†.

†तिर(स्>)श्-चि-[b]>°श्चि-राजि[b]– -जिम् अअ ३, २६[d]; –जेः कौसू ३२, ५; अअ ७, ५६; अपं २ : ८६.

तिर्य(रि-अ)च्,ञ्च्– पा ६, ३,९४; –र्यक् शांश्रौ ४, १२,५; १७, १,११; काश्रौ; आपश्रौ १,३, १२[e]; हिश्रौ ५, ४[e], ६; –र्यक्षु विध ५, १७,७, –र्यङ् वाधूश्रौ ३,६ : २[2]; ६९ : ३५; लाश्रौ; –र्यचि पा ३, ४, ६०; –र्यञ्चः वाधूश्रौ ३, ६ : ३, द्राश्रौ १०, ४, ८†; लाश्रौ ३, १२, ७†; विध ५१,६३; –र्यञ्चम् आपश्रौ २, ३, ११××; बौश्रौ १, ११ : ३६××; १२, ९:२४†[f]; –र्यञ्चि बौश्रौ ६,२६ : ८; वाधूश्रौ ३,६ : २; –र्यञ्चौ आपश्रौ २, १२, ८; बौश्रौ ५, ५ : ३०.

तिरीच,ची– -चम् वाधूश्रौ ३,६ : १; –ची वाधूश्रौ ३, ६ : १;२; –चीः वाधूश्रौ ३,६ : १.

तिरीचीन[g]– -नम् आपश्रौ २,१८,९.

तिर्यक्-तस्(:) आपश्रौ १४, ६,११; हिश्रौ ९,८, २८.

तिर्यक्-त्व– -त्वम् विध ४४, ४४; ४५, १;५८,५.

तिर्यक्-प्रमाण– -णानि आपश्रौ १,३,१७; –णेन आपश्रौ १६,४,७.

तिर्यग्-अङ्गुरि[a]– -रिम् कौसू ८७,१४.

तिर्यग्-अयन– >तैर्यगयनिक– -कः लाश्रौ ४,८, ७; द्राश्रौ ८,४,७; निसू ५,१२ : १५.

तिर्यग्-ग,गा– -गा अप ५८[2], ४, ६; –गाः अप ५२, १३,१.

तिर्यग्-द्विगुण– -णानि काशु ६, ७.

†तिर्यग्-बिल[b]– -लः शुअ ४,१९७; या १२,३८[h].

तिर्यग्-भे(द>)दा[a]– -दाः बौशु १७ : ८; १९ : ७.

तिर्यग्-योनि– -नयः विध ४४, १; –निषु विध ९६, ३९; –नौ अप ७०[2],१२,२;४; विध; –न्याम् वाध ४, ३१.

तिर्यग्योनि-गत– -तान् बौश्रौ २८,२ : ५३.

तिर्यग्योनि-भयावह– -हौ अप ६३,४,७.

तिर्यग्योनि-व्यवाय– -ये वाध २३,५.

तिर्यङ्-नद्ध– -द्धम् काश्रौ २२,४,१०.

तिर्यङ्-नीच– -चः शुप्रा १, १४९.

तिर्यङ्-मान[i]– -नम् काशु ७,३२.

तिर्यङ्मानी[j]– -नी काशु २, ७;९; ११; आपशु; –नीम् आपशु ४,७; बौशु २ : ९; हिशु २,६; –न्या काशु ३,३; आपशु २, १५; हिशु १, ३६; –न्याः काशु ७,५; बौशु १५ : २,–न्यौ आपशु ५, १२; हिशु २,२२.

तिर्यङ्मानी-शेष– -षः काशु १,१३;१५; आपशु १,७

?तिरोघसा वाधूश्रौ ४,१०२ : १५.

तिरो√धा[b]> °धा– -धाम् अअ ८,१०(५)†.

†तिरो-धाय बौश्रौ १४,७ : २३; २६,७ : २०; २१; वाधूश्रौ ४, १०२ : १४.

तिरो-हित– -तम् विध ७१,१९.

तिरो√भू, तिरोभवति आपश्रौ २३, १३, १५; हिश्रौ १८, ४, ५२; लाश्रौ १०, १९, ११; निसू १०, ११ : ५; तिरः ···भवति बौश्रौ १४, १ : २०; तिरोभवन्ति हिश्रौ १८, ४,४१; ४२; तिरः (अभवत्) वाधूश्रौ ४,२६[2] : ४.

तिरः···बभूव वाधूश्रौ ४, ७५ : ३५; तिरो···भवितास्मि वाधूश्रौ ४,७५ : २४; तिरोऽभूत् वाधूश्रौ ४,७५ : २४; ३६.

तिरो-भूत्वा वाधूश्रौ ३,२९ : ५.

तिरो-विराम[k]– -मः शैशि २३६; माशि; –मम् माशि ७,९; नाशि २,१,५[l].

तैरोविराम– -मः शुप्रा १,११८; –मम् याशि १, ८३[l].

तैरोविराम-क– -कः याशि १,७७.

---

*a*) विप.। बस.। *b*) वैप १ द्र.। *c*) वा. क्रिवि. इति BW.। *d*) पाभे. वैप १, १४७९ j द्र.। *e*) पाभे. पृ ११७३ c द्र.। *f*) पाभे. वैप १,१४७९ e द्र.। *g*) = तिरश्चीन-। *h*) पाभे. वैप १,१४८० f द्र.। *i*) उस. उप. भावकरणयोर्ल्युट् प्र.। *j*) = रज्जु-विशेष-। *k*) = स्वरित-विशेष-। *l*) सप्र. तिरो°<>तैरो° इति पाभे.।

तिरो-व्यञ्जन->तैरोव्यञ्जन[a]- -नः शुप्रा १, ११७; तैप्रा; नाशि १, ८, १०?[b]; २, १, ४?[b];८?[b].

तैरोव्यञ्जन-पादवृत्त- -त्तयोः तैप्रा २०,१२.

तैरोव्यञ्जन-सं(ज्ञा>)ज्ञ- -ज्ञः याशि १,७७.

तैरोव्यञ्जन-स्वरित- -तः कौशि ८.

**तिरिन्दिर**[c]- -रस्य ऋअ २, ८, ६; -रे शांश्रौ १६,११,२०; २१.

तैरिन्दिर[d]- -रम् बृदे ६,४७.

**तिरीच,ची**- प्रभृ. तिरस् द्र.

**तिरीट**- पाउ ४,१८५.

**तिरोअह्निय**- प्रभृ. तिरस् द्र.

**तिर्परीक-**, तिर्पिरिका- पावाग ८, २,१८[e].

†?**तिर्य**[c]- -र्यम् अप्रा ३,२,३१.

**तिर्यच्, ञ्च्**- तिरस् द्र.

√**तिल्** पाधा. भ्वा. पर. गतौ; तुदा. पर. स्नेहने.

**तिल**[f]- पागवा ५, ४, ३ ; -लः हिश्रौ २१, ३, १०; आगृ; -लम् आग्निगृ ३, ११, ४ : १८; वैगृ ४,४ : १८; बौध ३, १०, १५; -लस्य शंध ४०५; -लाः वैश्रौ १६,६ : ५; बौगृ; -लान् आपश्रौ १३, ५, ४†; माश्रौ; -लानाम् वैगृ ५,१३ : १३; जैगृ; -लेभ्यः बौश्रौ २, २० : ४; २४, २१ : ९; २८, ८ : ५; वैश्रौ १,१६ : ३; बौपि ३, १२, १; -लेषु बौश्रौ १८,२३ : १६; कौसू ९३, २९; -लैः कौगृ ३,१४,२; शांगृ.

तैल[b]- पाग २,४,३१[e]; -लः कौसू ९२, १०; -लम् बौश्रौ २८,१३ : ५; वैश्रौ; या ६,१७; -ले कौसू ९३,३९; अप ७०[२], ७,१३; ७१, १०, ४; ५; -लेन वैताश्रौ ४३, १२; अप १, २८, १; विध ४३,३८,

तैल-गुड-शुष्कगोमये(य-इ)न्धन-तृण-कुश-पलाश-भस्मा-(स्म-अ)ङ्गार- -रान् विध ६३, ३७.

तैल-द्रोणी- -ण्याम् वैश्रौ २०,२३ : २; हिपि २२ : १२.

तैल-धारा- -रा माशि ४, १५; -राम् शैशि ३५०.

तैल-परिप्लु(त>)ता- -ताम् अप ६८,५,१.

तैल-पात्र- -त्रम् गोगृ ३, ५,३०.

तैल-पायिन्[g]->°यि-क- -कः विध ४४,२३,

तैल-पीत- पाग २,२,३७.

तैल-बिन्दु- -न्दुः विध ३, ९७.

तैल-मिश्र- -श्रम् अप १, ४८,३; अशां १३,१.

तैल-वत् विध ६४,१२.

तैल-संयु(त>)ता- -ताः अप ३१,९,२.

तैल-संपर्क- -र्कः वैगृ ५,१४: २.

तैल-संपात- -तम् कौसू ३०,१.

तैल-सर्पिस्- -र्पिषी आपध १, १७, १६; बौध १, ६, ४८; हिध १,५,४८.

तैला(ल-अ)क्त- -क्तम् अप ३६, १६, १.

तैला(ल-अ)पूप- -पस्य कागृ ७०,१.

तैला(ल-अ)भ्यक्त,क्ता- -क्तः अप ६८, ५,१; -क्ता अप २६, ३,५.

तैला(ल-आ)मलक-संनिभ- -भाः अप ६३,४,८.

तैलो(ल-उ)दक- -कयोः विध ७१,२३.

तैलीन- पा ५,२,४.

१तिल-क- पा ५,४,३.

तिल-कट- पावा ५,२,२९.

तिल-कर[h]- -रम् विध ९,६.

तिल-कल्क- -ल्कैः विध १९,१८.

तिल-काल[e]- (> °ल-क- पा.) पागवा ५,४,३.

तिल-गन्ध-पुष्प-माल्य- -ल्यैः बौपि २,१०,२.

तिल-गोमय-कर्दम- -मैः अप ६८, ५,११.

तिल-तण्डुल- -लाः अशां १२, २; -लान् आग्निगृ ३,४, १ : २२; १०, १ : ९; बौपि; -लानाम् आग्निगृ ३, ४, १ : २०; बौपि; -लानि आग्निगृ ३,४,४ : २६.

तिल-तण्डुल-दधि-मधु-क्षीर- -राणाम् वैगृ ५,४ : १.

तिल-तण्डुल-पक्वान्न- -न्नम् वाध २, ३९?[i].

तिल-तण्डुल-संपर्क- -र्कः कप्र ३, ६,८.

तिल-तैल- -लम् अप २३, ५, ४; -लेन शंध २४२.

---

*a*) =स्वरित-विशेष-। *b*) °रव्य° इति पाठः ? यनि. शोधः (तु. याशि. प्रभृ.)। *c*) वैप १ द्र.। *d*) विप.। तस्येदमीयः अण् प्र.। *e*) तु. पागम.। *f*) वैप १ निर्दिष्टयोः समावेशः द्र.। *g*) =⌊परोष्णी-नामक-⌋पक्षि-विशेष-। उस.। *h*) उप. =१कर-। *i*) °न्नम् इति पाठः ? यनि. शोधः।

तिलतैल-तुला- -लाम् विध ९०, २२.
तिल-दधि-क्षौद्र-लवण-लाक्षा-मद्य-मांस-कृतान्न-स्त्री-पुरुष-हस्त्य-(स्ति-अ) श्व-वृषभ-गन्ध-रस-कृष्णाजिन-सोमो(म-उ)दक- -कात् शंध १५३.
तिल-दर्भ- -र्भान् आग्निगृ ३, ३, १ : १५.
तिल-दान- -ने बौध २, ८, १५[a]; -नेन अप ४,२,१०.
तिल-द्रोण- -णम् विध ५०,३७.
तिल-धान्या(न्य-अ)न्न-वस्त्र- -स्त्राणाम् शंध ३९५.
तिल-धेनु- -नुः अप ९, ३, ५; -नुम् आग्निगृ ३,१०, २ : १०; बौपि ३, ९, ५; अप ९, १, १; अशां १३,५; काध २७१ : ८.
तिलं-तुद- पावा ३,२,२८.
तिल-पात->तैलंपा(त>)ता[b]- पा ६,३,७१.
तिल-पात्र-दान- -नम् अप ६८,२, ६१.
तिल-पिञ्ज- पावा ४,२,३६.
तिल-पिशित- -तम् वागृ ४,२३.
तिल-पिश्ल[c]- -श्लम् मागृ १,२१, १२[d].
तिल-पिष्ट-माषो(ष-ओ)दन[e]- -नम् जैगृ २,९ : २७[f].
तिल-पिष्टा(ष्ट-आ)दि- -दिभिः आग्निगृ ३,३,१ : १३.
तिल-पेज- पावा ४,२,३६.
तिल-पेशल- -लम् कागृ ४०,१८[d].

तिल-प्रद- -दः विध ९२,२३.
तिल-प्रस्थ- -स्थस्य हिपि १७ : ८.
तिल-भक्ष[g]- -क्षः आपध १, २६, १५;२७,१; हिध १,७,२५;२६.
तिल-मधु-संसृष्ट- -ष्टम् बौगृ २, ११,५३.
तिल-मय- पा ४,३,१४९.
तिल-मात्र-चित्र- -त्रः या ३,१८.
तिल-मात्र-तुन्न- -न्नम् या ४,९.
तिल-माष- -षाः आपश्रौ १६,१९, १३; जैगृ १, ११ : ६; आपध २, १६, २३; हिध २, ५, २३; -षाणाम् कौगृ १,२१, ६; शांगृ १, २८, ६; जैगृ १, ११ : ४; -षान् द्राश्रौ ५, ४, २८; लाश्रौ २,८,२८; -षैः गोगृ २,९,६.
तिल-माष-व्रीहि-यव- -वाः बौश्रौ २४,५ : १५.
तिल-माष-व्रीहि-यवो(व-उ)दक-दान[h]- -नैः गौध १५,१४.
तिल-मिश्र,श्रा[i]- -श्रम् आश्रौ ८, १४,३; बौश्रौ २६, ३३ : १४; आग्निगृ; -श्राः आग्निगृ ३,४,४: २०;८,१ : ६; बौगृ; -श्राभिः आग्निगृ ३, ८, २ : ३८; ६५; बौपि १,१५ : ४५; हिपि १५ : १५; -श्रेण आग्निगृ ३,११,२:४.
तिलमिश्र-गन्धो(न्ध-उ)दक- -केन बौपि २,१२,२.
तिलमिश्र-पिष्ट-माषौ(ष-ओ)दन- -नम् आग्निगृ २,५,१:३५[f]
तिलमिश्रो(श्र-उ)दपात्रा(त्र-आ)नयन- -नम् हिध २,५,४५[j].

तिल-मुद्ग-माष-यव-गोधूमा(म-आ)दि- -दीनाम् शंध १४६.
तिल-मुद्ग-मिश्र- -श्रम् पागृ १, १५,४; जैगृ १,७ : २.
तिल-लाज- -जैः वैगृ ५,१० : ५.
तिल-वत् कप्र १,३,९.
†तिल-व(त्स>)त्सा[k]- -त्साः आग्निगृ ३, ८,२ :३९; बौपि १, १५ : ४६.
तिल-वर्जम् शंध २७७.
तिल-व्रत- (> °तिन्- पावा.) पावाग ५,१,९४.
तिल-व्रीहि-यवा(व-आ)दि- -दीनाम् अप ७०,४,९.
तिल-शण-गोमय-शान्ता-ज्वाल[l]- -लेन कौसू २७, ३३.
तिल-सक्तु- -क्तुभिः बौगृ २,१,१८.
तिल-सक्तु-दधि-लाज- -जम् वैध २,१५,१.
तिल-संबन्ध- -न्धम् विध ६८,२९[m]
तिल-सर्षप- -पैः कौगृ ३, १, २; शांगृ ३,१,३; वैगृ ३, १४ : २; अप ३१,८,५.
तिला(ल-अ)क्षत- -तान् वैगृ ५, १२ : ४; -तेषु वैगृ ५,६ : १०.
तिलाक्षता(त-आ)दि- -दीनि वैगृ ५,४ : २२.
तिला(ल-अ)क्षतो(त-उ)दक- -कैः वैगृ ५,२ : २०;२४.
तिला(ल-अ)नुप्रकिरण- -णम् हिध २,५,४५.
तिला(ल-अ)न्तर- -रम् नाशि १,६, ९.

---

*a*) °ल्लादा° इति Hultsch । *b*) जः प्र. (पा ४,२,५८) । *c*) षस. । उप. ? = चूर्ण- वा पात्र-वेति भाष्यम् । *d*) सपा. °पिश्लम् <> °पेशलम् इति पाभे. । *e*) षस.>मलो. कस. । *f*) सपा. तिल-पिष्टमाषो° <> तिल-मिश्रपिष्टमाषौ° इति पाभे. । *g*) उप. कर्तरि कृत् । *h*) तु. जीसं. St. । *i*) विप., नाप. [बौश्रौ. प्रभृ.] । *j*) सप्र. आपध २, १७, १७ उदपात्रानयनम् इति पाभे. । *k*) विप. । बस. । *l*) शान्ता- = ओषधि-विशेष- । *m*) °संयुक्तम् इति जीसं. ।

तिला(ल-अ)म्भस्– -म्भाः शंध १२१.

तिला(ल-अ)र्थ– -र्थः आगृ २, ५, १५; कौगृ; –र्थम् बौगृ १,१, २४; –र्थाः अप ४४,१,१०.

तिला(ल-अ)शन[a]– -नः बौध ४,५, २६.

तिलो(ल-उ)दक– -कम् आग्निगृ ३, ३, २ : २२; ११, ३ : २१; बौगृ; –केन आग्निगृ १,२, २ : ३७; –कैः आग्निगृ ३, ११, २ : १०;३ : १७; वैगृ ७,८ : ३.

तिलोदक-दाना(न–अ)न्त– -न्तम् बौपि २,११,५.

तिलोदक-पात्र– -त्रम् बौपि २, ९,२; १०,३; –त्रे बौपि २, ९, ५; ११,२.

तिलोदक-प्रदान– -नम् बौपि २,१२,४; भागृ ३,१७ : १०.

तिलो(ल-ओ)दन– -नः अप १,३४, ४; –नम् वैगृ ५, १३ : ८; –नस्य वैगृ ५, १४ : ६; –नेन वैगृ ५,१३ : १६.

तिलो(ल-उ)दुम्बरपत्र-दर्भ– -र्भान् वैगृ ५,१५ : १;२.

तिलौ(ल-ओ)दन– -नः कौसू १३८ : २.

तिल्य– पा ५,१,७;२,४; फि ७६.

१तिल-क– तिल– द्र.

२तिलक[b]– पाग ५,१,१२८[c];२,३६.

तैलक्य– पा ५, १, १२८.

तिलक-वत्– -वान् बौश्रौ १५, ३७ : १; १८,१ : ६.

तिल(क>)का-वल[d]– -लः शांश्रौ १६, १८, १८; –लम् आपश्रौ २०,२२,६; हिश्रौ १४,५,४.

तिलकित– पा ५,२,३६.

†तिलदा[e]– -०दे आपमं २,११,१९; आग्निगृ २, १, ३ : ९; भागृ १, २२ : १४; वैगृ ३, १४ : १३; हिगृ २,३,३.

तिलिका– (>तैलिक्य–) २तिलक– टि. द्र.

तिलिञ्ज[f]– -ञ्जम् अप्रा ३,४,१†.

तिलिञ्ज्य– -ञ्ज्याः कौसू ८०,२८.

तिलिपलिका[g]– पावाग ८,२,१८.

√तिल्ल् पाधा. भ्वा. पर. गतौ.

तिल्व[f]–>तिल्व-क,का– -कः आगृ २,७, ६; –काम् आग्निगृ ३, ५, ५ : ६; बौपि १,४ : ६.

तैल्वक[f]– -कः काश्रौ २२, ३,९; आपश्रौ २२,४,१५; हिश्रौ १७, २,२१; –कम् आपश्रौ १६,१०, २; हिश्रौ ११, ३, १९; –कानि बौश्रौ १८, ३६ : २; –कौ वैश्रौ १८,७ : १८.

तैल्वकी– -कीम् माश्रौ ६, १,३,२८; २९; वाश्रौ २,१, २, २८.

†तिल्विल,ला[h]– -ला आपमं २,१५, ३; आगृ २,८,१६; कौगृ ३, २, ६; शांगृ ३, ३, १२; मागृ २, ११, १२; –ले ऋप्रा १४,५८.

?···तिव वाधूश्रौ ३,५ : १.

?तिव्यपासम्[i] वाश्रौ ३,२,१, २४.

तिष्ठत्– प्रभृ. √स्था द्र.

तिष्य[j]– फि २३; –ष्यः बौगृ १, १, २१; भागृ २, १८ : ६; –ष्यात् आपध २, २०,४; हिध २,५,९; –ष्याय वैगृ ३, २० : ५, –ष्ये बौश्रौ १७, ३९ : ९; आग्निगृ; –ष्येण आगृ १,१३,२; आपगृ.

तैष– पाग ६, २, १९४[k]; पा, पावा ६, ४,१४९; –षस्य शांश्रौ १३, १९, ३; –षे बौगृ २, ११,२.

तैषी– -षीम् गोगृ ३,३,१४; जैगृ १, १५ : १; –ष्याः हिश्रौ १३,३,२; वैताश्रौ ३६, २, गोगृ ३,१०,१६; –ष्याम् बौश्रौ १३, १७ : ३; माश्रौ.

तैषी-पक्ष– -क्षस्य आग्निगृ १, २, २ : १; भागृ ३, ८ : ११; हिगृ २, १८, ८; हिध १,३,२.

तैष्या(षी-आ)दि– -दि आश्रौ ८,१४,२२.

तिष्य-नक्षत्र-संयुक्त– -क्ते अप ५, ४,२.

तिष्य-पुनर्वसु– -स्वोः कौगृ १, २०, ३; पा १,२,६३.

तिष्य-पुनर्वस्व(सु-अ)नुराधा (धा-अ)श्वि-रेवती– -त्याम् आग्निगृ २, २,३ : २.

तिष्य-पुष्य– -ष्ययोः पावा ६, ४, १४९.

तिष्य-बृहस्पति– -तिभ्याम् कागृ १८,२.

तिष्य-मूल– -लयोः आग्निगृ २, ५, १२ : १.

तिष्य-रोहिणी– -ण्याम् आग्निगृ २, ५,६ : १२.

---

*a*) विप. । बस. । *b*) = विशेषक- । व्यु. ? । *c*) तिलिका- इति पाका. । *d*) मत्वर्थे वलच् प्र. उसं. (पा ५, २,११२) पूप. दीर्घः (पा ६,३,११८) च । *e*) =जरायु- । व्यु. ? । *f*) वैप १ द्र. । *g*) तु. पागम. । *h*) विप. (स्थूणा-, क्षेत्र-) । वैप १ द्र. । *i*) पाठः ? व्यत्यास–> -सम् इति शोधः (तु. तत्रैव ३२) । *j*) =नक्षत्र-विशेष- । व्यु. ? । *k*) अर्थः ? । नैष- इति पाका. ।

ति(ष्य>)ष्या-पूर्णमास[a]- -से बौश्रौ १३, १७ : २; २३, २ : २२; हिश्रौ २२,३,७.

तिष्यो(ष्य-उ)त्तर- -रेषु वैगृ २, १३ : २.

**तिसृ-** प्रभृ. त्रि- द्र.

**तिसृणीभिः**[b] अप १,४०, ३; अशां १०,३.

**तिस्तिराण-** √स्तृ,स्तॄ द्र.

**√तीक्** पाधा. भ्वा. आत्म. गतौ.

**१,२तीक्ष्ण-** प्रभृ. √तिज् द्र.

**√तीर्** पाधा. चुरा. उभ. कर्मसमाप्तौ.

**तीर**[a]- -रयोः हिश्रौ १०, ३, १७; -रस्य पावा ६, ३, १०८; -रे माश्रौ ५, २, २, ६; लाश्रौ; आग्निगृ २, १, २ : १२†[c]; बौगृ; हिगृ २, १, ३†[c] -रेण आश्रौ १२, ६, ३ ; शांश्रौ ; †आपमं २, ११, १२[c]; १३[c]; बौगृ १, १०, ११†[c]; भागृ १, २१ : ८†[c].

तीर-रूप्यो(प्य-उ)त्तरपद- -दात् पा ४,२,१०६.

**तीर्थ**[a]- पाउ २, ७; पाग २, ४, ३१; ४, २, ८०; १२७; ३, ७६; ५, १, ६४; ९७; -र्थम् आश्रौ १, १, ७; शांश्रौ; या ४, १५; -र्थस्य वाश्रौ ३, २, ५,४५; वैगृ ५, ७ : ९; शंध १०३; -र्थात् काश्रौ १४,३,१६; बौश्रौ;-र्थानि बौश्रौ १५, १ : ४; वाधूश्रौ; -र्थाय वाश्रौ ३, ४, १, २०; -र्थे काश्रौ १४,४,११; आपश्रौ; आपध २, १६, २५[d]; हिध[d] २, ५, २४; १०५; पा ६,३,८७[e]; -र्थेऽर्थे वाधूश्रौ २, १७ : २; -र्थेन आश्रौ १, ११, १४[f]××; काश्रौ ५, ५, १०××; आपश्रौ; वैगृ १, २ : ६; ५ : ६; ८;१०; १३ : १; १४ : ४; -र्थैभिः या १४, ३१;-र्थेषु जैगृ २, ५ : १५; अप; -र्थैः अअ १८, ४†; या १४, ३१.

तैर्थ- पा ४,३,७६; ५,१,९७.

तैर्थक- पा ४,२,१२७.

तैर्थिक- पा ५, १, ६४.

तैर्थ्य- पा ४,२,८०.

तीर्थ-गमन- -ने बौश्रौ २१, ८ : १; वाध २१,९.

तीर्थ-देश- -शात् आश्रौ ५, २, ६; ८,१३, २३; -शे आश्रौ ५, १, १३; ६,१२,६; ९, ९,८; वैताश्रौ २७,९; ३४,१२.

तीर्थ-पूत- -तः विध ८३,९.

तीर्थ-मृत्यु- -त्यवः अप ४१,४,७.

तीर्थ-यात्रा[g]- (>तैर्थयात्र> श्री- पा.) पावाग ५,१,११०.

तीर्थयात्रा(त्रा-आ)श्रित- -तम् शंध १०४.

तीर्थ-वासिन्- -सिनाम् वाध २६, १२.

तीर्थ-व्यतिक्रम- -मे बौगृ ४,३,६.

तीर्थ-सद्- -सदे मागृ १, १३, १४†.

तीर्थ-स्थाणु-चतुष्पथ-व्यतिक्रम- -मे आपगृ ५,२५; बौगृ ४, २,१४.

तीर्थ-स्थान- -ने वैगृ ५,७ : ९.

तीर्थ-स्नान- -नात् शंध १००.

तीर्था(र्थ-आ)ग(त>)ता- -ता माशि १५,७.

तीर्था(र्थ-अ)नुसरण- -णम् विध २, १६; -णेन विध ३६,८.

तीर्था(र्थ-अ)न्त- -न्ते वाश्रौ ३, १, १,३०; ४,१,२३.

तीर्था(र्थ-अ)भाव- -वे शंध १००.

तीर्थो(र्थ-उ)दक- -कम् अप १६, १,५; -केन अप १६,१,६.

तीर्थोदक-पूर्ण-कलश- -शम् अप १०,१,१.

तीर्थ्य[a]- -र्थ्यान् बौश्रौ ६,१:२५.

**तीर्ण-**, तीर्त्वा √तॄ द्र.

**√तीव्** पाधा. भ्वा. पर. स्थौल्ये.

**तीवर-** पाउ ३,१.

**तीव्र,व्रा**[a]- पाउभो २, ३, ३०; पाग ३, १, १८[h]; ४, २, ५३[i]; -व्रः शांश्रौ १४, २१, २; आशि ८, २०; -व्रम् माश्रौ २,५,१,३२; अप; -व्रस्य आश्रौ ९, ७, ३२; शांश्रौ; -व्राः †आश्रौ ६,५,२४; ७, ६, २; शांश्रौ; बृदे ३, ९, ४†[j]; या ९, १७†; -†व्रान् काश्रौ १०,५,९; आपश्रौ; -व्राम् बौश्रौ १७, ३२ : १†; -व्रेण बौश्रौ १७,३२ : १†; अप ५२, २,१; वाध २५,७.

तैव्रक- पा ४,२,५३.

तीव्र-गति-त्व- -त्वात् आशि ८, २०.

तीव्र-तर,रा- -रम् तैप्रा १७, १, ४; -रा आपध २, १६, २४; हिध २,५,२४.

तीव्र-ता- -ता बौश्रौ १८, ३० : ५; -ताम् बौश्रौ १८,३० : ९†;

तीव्र-दारु[k]- (>तैव्रदारव- पा.) पाग ४,३,१५४.

---

*a*) वैप १ द्र. । *b*) पाठः ? त्रि-सृ(णि>)णीभिः इति अशां. संस्कर्तुरभिमतः शोधः । *c*) सपा. तीरे<>तीरेण इति पाभे. । *d*) =दानार्ह-पात्र- । *e*) =गुरु- । *f*) °र्थे इति BI. । *g*) तु. पागम. । *h*) तु. पाका. । *i*) व्यप. । *j*) उतेरणा संधिरार्षः । *k*) =वृक्ष-विशेष- ।

तीव्र-सव[a]- -वः शांश्रौ १४,२१,१.
१तीव्र-सुत्[b]- -सुत् शांश्रौ १४, २१,२†.
२तीव्र-सुत्[a]- -सुत् काश्रौ २२, ९, १५; -सुतम् बौश्रौ १८,४१ : १६†; -सुता आपश्रौ २२,१०, ६; हिश्रौ १७, ४, २३; -सुति काश्रौ ८,८,२०; लाश्रौ ८, १०, ७.
तीव्रसुच्-चतुःपर्याय- -ययोः वैताश्रौ ४०,५.
तीव्रसुद्-उपशब्दो( द्-उ ) पहव्य- -व्येषु वैताश्रौ ३९,९.
तीव्र-सोम[c]- -मः बौश्रौ १६, ३१ : १८; -मे बौश्रौ १८,२९ : २१; -मेन आश्रौ ९,७,३१.
तीव्रा(व-अ)न्त[c]- -न्तम् आश्रौ ५, १,१५[d].
√तीव्राय पा ३,१,१८.
तीव्रा( व्र-अ )र्थ-तर- -रम् या ४, २५.
तीव्री√कृ>°कृ( त> )ता- -ताभिः वैश्रौ १६,२२ : २.
तीव्री-कृत्य आपश्रौ १३,१७,९; हिश्रौ ९,४,५५.
√तु[c] पाधा. अदा. पर. गतिवृद्धिहिंसासु, †तूताव निघ ४, १; या ४,२५.
तूतोत् ऋप्रा ७,४२†.
*तव->तवीयस्[c]- -यान् अप्रा ३,३,४.
†तव्य( स्> )सी[c]- -सीम् आश्रौ ५, २०, ६; शांश्रौ ८, ६, ६; निसू ३, ९ : २०; ऋअ २,१,१४३.
†तवस्[c]- -वः निघ २,९[f]; -वसः शांश्रौ ८,२३,१; अप ४८,६८†[g] निघ ३, ३†[g]; या ५, ९∮; -वसम् आश्रौ २, १३, ९; ४, १३,७; शांश्रौ; या ५,९; -वसे आश्रौ ७, ४, ८; शांश्रौ १२,४, १७; शांगृ ५, ६, २; ऋप्रा २, ४४.
†तवस्-तम- -मः[h] शांश्रौ ८, १७,१; १८,३,२.
†तवस्-तर- -रम् आश्रौ ६,४, १०; आपश्रौ.
तविष, षा[i]- पाउ १, ४८; -षः निघ ३,३†[g]; -षाः आश्रौ २, १३,७†; कौसू ६,९[j]; -षेभिः या २,२४∮†.
†तविषी- -षी अप ४८, १०३; निघ २,९; या ९,२५∮; -षीभिः आश्रौ ९,५,५; आपश्रौ ५, १०, ४; माश्रौ १,५,२,१४; वाश्रौ १, ४,२, ५; हिश्रौ ३,३, ३६; -षीम् हिश्रौ १२, ६, ६; या ९,२५†;
√तविष, ?तविष्यते निसू ७, ८ : ३४†[k].
ताविष- पाउभो २,३,१५७.
तु,>तू[c] आश्रौ १, १, ३; २, १८, १९; शांश्रौ १, १, ४०; १५, २७,१[l]; १६, १३, १५[m]; १८, १३, ४; १५; काश्रौ; पा ८,२, ९८; पाग १, ४, ५७[n]; पावा १, १, १××; पाप्रवा १, ६; ९; ११; ५,१४.
तु-नु-पूर्व- -र्वः तैप्रा ५,१३.
तु-शब्द- -ब्दः उनिसू २ : १३.
तु-हि-ह-वै-त(द्>)च्-छ(<श) ब्द—विशिष्ट- -ष्टानि ऋअ १, १२,३.
तुक[o]- -कः अप ४८,८९.
तुक्ष- (>तौक्षायण- पा.) पाग ४, २,८०.
१तुग्र[c]- > †तौग्रय- -ग्र्यः शैशि ३३०; -ग्रयम् ऋप्रा ५,३६.
२तुग्र->तुग्रिय- पा ४,४,११५.
†तु(ग्र्य>)ग्र्या[c]- -ग्र्या निघ १,१२; -ग्र्याः अप ४८,७५.
तु(ग्र्य>)ग्र्यावृध्[c]- -वृधः ऋप्रा ९, ११†.
तुग्वन्[c]- -ग्व या ४,१५∮; -†ग्वनि अप ४८,११५; निघ ४,१.
तुङ्ग- पाउभो २,२,६६.
तुच्[c]- पाउभो २, १, २४६[p]; †तुक् अप ४८,८७[२], निघ २,२; साअ १,३९५[२].
तुच्छ- पाउभो २,२,८३.
तुच्छ्य[c]- -च्छ्यान् ऋप्रा १४,५२†.
?तुच्छुब्दः दंवि २,११.
√†तुज्,ञ्ज्[c,q] पाधा. भ्वा.पर.हिंसायाम्; चुरा. पर. हिंसाबलादाननिकेतनेषु, तुञ्जते वैताश्रौ ३१, २७; तुञ्जति अप ४८,१३;१४;

a) =एकाह- [याग-विशेष-]। उस. उप. अधिकरणे प्र.। b) विप.। उस.। c) वैप १ द्र.। d) पाभे. वैप २, ३खं. तीव्रान्तम् ऐब्रा २, २० टि. द्र.। e) या ९, २५ पा ६,१,७; ७, ३,९५ परामृष्टः द्र.। f) बल-नामन्-। g) महन्-नामन्-। h) पाभे. वैप १,१४९१ q द्र.। i) वैप १ निर्दिष्टयोः समावेशः द्र.। j) =बलवत्-। विशेषः वैप १, ८४३ k द्र.। k) वैप १, १४८३ d द्र.। l) पाभे. वैप २,३खं. स्थ ऐब्रा ७, १८ टि. द्र.। m) पृ १९४ b द्र.। n) तु. पागम.। o) गृह-नामन्-। p) <√तु इति। q) या ६, १७ परामृष्टः धा. च दाने वृत्तिः द्र.।

निघ ३,२०.

तुज्यते या १४,२६ ∮.

तुज्[a]– तुजा उसू २,२५†.

तुज[b]– -जः निघ २,२०†.

†तुज्यमान– -नासः अप ४८, १०६; निघ २, १५.

†तुञ्ज[a]– -ञ्जः निघ ४, ३; या ६, १७ ∮; –ञ्जेऽ-ञ्जे या ६,१८ ∮.

†तूतुजान[c]– -नः अप ४८, १०६; निघ २,१५; या ६,२० ∮; ऋप्रा ७,२७.

तूतुजि[c]– -जिः अप ४८, १०६; निघ २,१५.

†?तुजः[d] शांश्रौ १८,३,२.

†तुजि[e]– -जये या १२,४५ ∮.

√तुञ्ज् पाधा. भ्वा. पर. पालने; चुरा. पर. भाषार्थे.

√तुट् पाधा. तुदा. पर. कलहकर्मणि.

तुटि–> तुट्या( टि-आ )कार[f]– -रम् वैगृ ४,१३ : ८.

√तुड् पाधा. भ्वा., तुदा. पर. तोडने[g].

√तुण् पाधा. भ्वा.; तुदा.पर.कौटिल्ये.

√तुण्ड् पाधा. भ्वा. आत्म. तोडने[h]

तुण्ड[a]– पा, पाग ५, २,१२७[i]; –ण्डैः अप ६४,७,९.

तुण्डिक[a]– -कः अप्रा ३,४,१†.

तुण्डेल[a]– -लम् अप्रा ३,४,१†.

तुण्डदेव[j]–(> °व-भक्त– पा.) पाग ४,२,५४.

तुण्डि– पाउ ४, ११८;पाग५,२,९७[k].

तुण्डि-भ– पा ५,२,१३९[l].

तुण्डिकेर[l]– -रः भागृ १,२३:३†[m].

तुण्डिल– पाउ १, ५४[n]; पा ५, २, ९७[o]; –लः कौगृ ४, ४, १९; शांगृ ४, १९,३[p]; –लस्य कागृ ७०, ४[q].

√तुत्थ् पाधा. चुरा. उभ. आवरणे.

तुत्थ– पाउ २,७[r].

तुथ[a]– -†थः शांश्रौ ६, १२, १७; आपश्रौ; माश्रौ २,४,१,६[?s].

तुथ्य[t]–> तुथ्या( थ्य-आ )ग्निवेश्यौ (श्य-औ)जैयान– -नानाम् हिश्रौ २१,३,१०[u].

√तुद्[v] पाधा. तुदा. उभ. व्यथने, तोतुद्येते कौसू १०७,२†.

१तुद[w]– -दस्य या ५,७.

तुद्यमान– -नाः विध ४३,३५.

तु(न्न>)न्ना– -न्ना या ९,२६.

तुन्न-वत्– -वत् या ४,९.

तोत्त्र[x]– पा ३,२,१८२; –त्त्रेण कौसू १४,६.

†तोद[a]– -दः निघ ४, २; या ५, ७ ∮; –दस्य या ५, ७; –देन कौसू १०७,२[x,y].

२तुद[z]– (> तौदेय– पा.) पाग ४, १,१२३.

तुनुपूर्व– तु द्र.

१तुन्द[a1]– पाउ ४, ९८; पाग ५, २ ११७;१२७.

२तुन्द– पा ५, २,१२७.

तुन्द-परिमृज– पा, पावा ३,२,५.

तुन्द-वत्– पा ५,२,११७.

तुन्दा(न्द-आ)दि– -दीनाम् पावा ५,२,९७.

तुन्दिक–, तुन्दिन्– पा ५,२,११७.

तुन्दिल– पा ५,२,११७; –लः मागृ २,१०,४.

तुन्दि[b1]–> °न्दिभ– पा ५,२,१३९.

तुन्य[c1]– -न्यम् अप १,७,१.

√तुप् ⌊,म्प्⌋,तुफ् ⌊,म्फ्⌋ पाधा. भ्वा., तुदा. पर. हिंसायाम्.

√तुभ्[d1] पाधा. भ्वा. आत्म., दिवा. क्र्या. पर. हिंसायाम्.

तुभ्य– युष्मद्– द्र.

तुम् पाग १,४,५७.

तुमुल[e1]– पाउभो २,३, ११०; –लः द्राश्रौ ४,३, ३; लाश्रौ २,३,३; अप ७०[२],२१,२; ५; –लम् अप ५०,७,१; ७०[२],३,१.

√तुम्प् √तुप् , √तुम्ब् टि. च द्र.

√तुम्फ् √तुप् द्र.

√तुम्ब् पाधा. भ्वा.पर. अर्दने; चुरा[f1]. पर. अदर्शने.

---

*a*) वैप १ द्र. । *b*) = वज्र- । कर्तरि अच् प्र. (तु. दे.) । *c*) वैप १ निर्दिष्टयोः समावेशः द्र. । *d*) पाठः? शोधार्थं वैप १,१४८६ d द्र. । *e*) वैप १,१४८५ s द्र. । *f*) विप. (ग्रहपीठ-) । बस. पूप. = त्रुटि-(अर्थः? ⌊तु. C. टि.⌋) । *g*) √तूड् इत्यपि BPG. । *h*) चुरा. पर. प्रेरणे इति BPG. । *i*) तु. पागम. । *j*) = मनुष्यजाति-विशेष- इति MW. । *k*) = तुन्दि- इति पागम. । *l*) = बालग्रह-विशेष- । व्यु. ? । *m*) सपा. तुण्डिकेरः <> तौण्डुलेयः <> शाण्डिकेरः इति पाभे. । *n*) < √तुण्ड् इति । *o*) < तुण्डि– इति पागम. । *p*) अर्थः ? = (पिष्टमय- )· तुन्दिल-पुरुष- इति नारायणः । *q*) = पुरोडाशाकृति- इति देवपालः । *r*) < √तुद् इति । *s*) पाभे. वैप १,१४८६ j द्र. । *t*) = ऋषि-विशेष- । व्यु. ? । *u*) पाभे. पृ ८७७ p द्र. । *v*) या ५,६;१०,७ परामृष्टः द्र. । *w*) = तोद- । कर्तरि कः प्र. । *x*) = प्रतोद- । *y*) करणे प्र. । *z*) व्यप. । व्यु. ? । *a1*) = जठर- । व्यु. ? । *b1*) = ⌊वृद्धा-⌋ नाभि- । व्यु. ? । *c1*) अर्थः व्यु. च ? । *d1*) पा ३,१,५५ परामृष्टः द्र. । *e1*) विप. । व्यु. ? < √तु इति अभा., √तम् इति पाउभो. । *f1*) √तुम्प् इत्यपि BPG. ।

**तुम्बर**[a]– -रम् अप ३६,४,२.

**तुम्बर-दण्ड**– -ण्डः आशां २२,१†; -ण्डेन कौसू ७६,२.

**तुम्बुरु**[b]– पाउभो २, १,१०२; पाग ४, ३, १०६[c]; –रुणा नाशि १, ५, १४.

**तौम्बुरविन्**– पा ४,३,१०६.

**तुम्बुरु-नारद-वसिष्ठ-विश्वावस्वा(सु-आ)दि**– -दयः नाशि २, ७, १२.

**†तुम्र**[d]– -म्रम् आश्रौ ३,८, १; शांश्रौ १४,२१,२.

**√तुर्**[d] पाधा. जु. पर. त्वरणे.

**†तुर्**[d]– तुरम् आपश्रौ ६, २२,१; कौसू ९१,१०.

**१तुर**[d]– -†०र गोगृ ४,९,१६; द्राग्र ४,४, २; –रः आपश्रौ ६, १७, १२†[e]; हिश्रौ ६,६,१६†[e]; आपमं १,१४,२†; वागृ ५,१५; †या ३, २१[e]; १२,१४∲; –रस्य आश्रौ ७, ११, ३४; –राणाम् बौश्रौ १३,२०:९†; हिश्रौ २२,३,१९; ऋप्रा १७,३४; –राय आश्रौ २, १६,११; ३,७,१२†; शांश्रौ १४, १६,९†; ३१,५†; ४९,२; हिश्रौ ९, २,२४†; वैताश्रौ ३१,१९.

**तुर-ग**[f]– -गाः अप ७०[3], ११, ३१; –गे विध ९९,११.

**तुरं-ग**[f]– -गम् विध ५०, २६; ७८, ३४; –गस्य भागृ २, ६ : १६.

**तुरंग-स्कन्ध**– पावा ४, २, ५१.

**तुरं-गम**– -मानाम् अप ७०[3], ११,१३.

**तुर-या(न>)ण–>तौरयाण**[g]– -णः निघ ४,२; या ५,१५†∲.

**तुर-श्रवस्**[h]– -वाः साअ १, २९.

**तौरश्रवस**[i]– -सम् आपश्रौ १४, २०, १; क्षुसू १, ८ : ९; १४; लाश्रौ ७, ३,३; –से काश्रौ २५,१४,१३.

**†तु(र>)रा-षा(<सा)ह्**[d]– -षाट् आश्रौ ५, १६,२; ६, ३, १; शांश्रौ ९,५,२; बृदे ४,७५; अअ २,५; अप्रा ३,४,१.

**√तुरीय, तुरीयति** निघ २, १४†.

**तुरण**– पाउभो २,२,१२६; पाग ३, १,२७;

**तुरण्य–>√तुरण्य**[j], **तुरण्यति** या २,२८∲†.

**†तुरण्यत्**– -ण्यतः बौश्रौ ११,८ : २६; १५,२९ : १७.

**†तुर्वणि**[d]– -णिः निघ ४, ३; या ६,१४∲.

**तूर्ण**– पा ७, २, २८[k]; –र्णः काश्रौ १०,१,८; –र्णम्[l] काश्रौ ८, १, २; २५,१०,२३; भागृ २,१० : १६; अप ३५,२,९; ७०[2], १९, ६; ७१,८,२; बृदे २,५८; ३,१६; या २,२८; ४,१५; ५, १६; २५; ६,२०; ८,१३; १०,२७; पाग १, १,३७[c].

**तूर्ण-गति**[m]– तिः या १२,१४.

**तूर्ण-यान**[m]– -नः या ५,१५∲.

**तूर्ण-वनि**[n]– निः या ६, १४.

**तूर्णा(र्ण-आ)पिन्**[o]– -पि या ६, २१.

**तूर्णि**[d]– पाउ ४,५१; –†र्णिः आश्रौ १, ३,६; शांश्रौ; या ७,२७∲; –†र्णिम् आपश्रौ ५, १०, ४; माश्रौ १,५,२,१४; वाश्रौ १,४, २,५; हिश्रौ ३,३,३६.

**तूर्ण्य(र्णि-अ)र्थ**[d]– -र्थाः आश्रौ ५,१,११†.

**२तुर**[p]–>**तौर**[q]– -रम् निसू १०,११ : १०; –रेण लाश्रौ १०,२०,१.

**तुरा(र-अ)यण**– -णम् आश्रौ २, १४, ४; शांश्रौ ३, ११, १५; काश्रौ २४, ७,१; –णेन आपश्रौ २३,१४,१; हिश्रौ १८, ४,५३.

**तौरायणिक**– पा ५,१,७२.

**तुरि**– पाउभो २,१,१५९.

**†तुरीप**[d]– -पम् आश्रौ १,१०,५; ३ ८,१; शांश्रौ; या ६,२१∲.

**तुरीय**– प्रभृ. चतुर्– द्र.

**तुरुष्क**– पाउभो २,२,६.

**†तुर्फरि**[d]– -री या १३,५∲.

**†तुर्फरीतु**[d]– -तू या १३,५∲.

**तुर्मिश**[d]– -र्मिशम् अप १,११,१†.

**तुर्य**– प्रभृ. चतुर्– द्र.

**तुर्वणि**– √तुर् द्र.

**†तुर्वश**[d]– -शाः अप ४८, ७८; निघ २,३; –शाय आश्रौ ९, ५, २; –शे निघ २,१६; अप ४८,७३.

**√तुल्** पाधा. चुरा. पर. उन्माने, तुल्यते विध १०, ११.

---

*a*) =वृक्ष-विशेष-। व्यु.?। *b*) व्यप.। व्यु. ?। *c*) तु. पागम.। *d*) वैप १ द्र.। *e*) पाभे. वैप १,१४८७ f द्र.। *f*) =अश्व-। उंस. उप. <√गम्, पूप. भाप. (तु. अभा. प्रभृ.)। *g*) विप.। बस. पूप. (तूर्ण- [या.])>स्वार्थिकः अण् प्र. (तु. SEY १०९)। *h*) =ऋषि-विशेष-। बस.। *i*) =साम-विशेष-। *j*) वैप १ द्र. (वैतु. पाप्र.<तुरण- इति)। *k*) <√त्वर्। *l*) वा. क्रिवि.। *m*) विप.। बस.। *n*) उस. उप. <√वन्। *o*) उस. उप. <√आप्। *p*) वैप २,३खं. द्र.। *q*) =याग-विशेष-।

तुला[a]– पाग ३, ३, १०४[b]; –लया वाध २, ४२; बौध १, ५, ७९; विध ८,३६; –ला विध ९,२३; १०,३; –लाम् अप ११,१,१०; शंध ४०५; विध १०,९.

तौल्य[c]– -ल्यम् अप ११, १, १५.

तुला-कूट– -टम् अप ९,३,४.

तुला-धार[d]– -रम् विध १०, ८; –रस्य विध १०,९.

तुला-धृत– -तम् वाध २,४७.

तुला-पुंस्[e]– -पुमान् बौध ४,५, २२.

१तुला-पुरुष[e]– -षः विध ४६, २२.

२तुला-पुरुष– >°ष-विधि– -धिम् अप ११,१,१.

तुला-मान[f]– >°न-कूट-कर्तृ– -र्तुः विध ५,१२२.

तुलामान-प्रतिमान-समुत्थ– -त्थानि शंध २६२.

तुलामान-प्रतीमान-व्यवहारा-(र-अ)र्घ-संस्थापन– -नम् शंध ३२०.

तुला(ला-आ)रोहण– -णम् शंध २६५.

तुलित– -तः विध १०,१२.

१तुल्य,ल्या– पा ४, ४, ९१; –ल्यः वैगृ ५, ११ : २; बृदे; –ल्यम् काश्रौ १२, २, ७××; काठश्रौ; –ल्ययोः आपशु २,६; हिशु १, २६; –ल्या काठश्रौ ८८; काश्रौसं २८ : ६; ३१ : १३; अप; –ल्याः काश्रौ १५, ८,२१;१६,१,१०; वैगृ; –ल्यान् माश्रौ ५,२,१२,४; अप २६,४, ५; –ल्यानाम् मीसू ११,१,५५; ६७; –ल्यानि मीसू ४,४, ३९; –ल्याम् वाश्रौ १,१,१,७०; वैगृ ५, ९ : ८; –ल्ये काश्रौसं ३ : ४; ऋत ४,३,८; –ल्येन काठश्रौ ८८××; कागृ; –ल्येषु मीसू ५, ३,४०; ९,१,१९; १०,६, ५७; –ल्यैः वाध १७, ७१; –ल्यौ गोगृ ३,५,२३; जैगृ १,१९:३१.

तुल्य-कल्प[g]– -ल्पाः मीसू ६,६,१.

तुल्य-कारण-त्व– -त्वात् पावा १,२,७१; २, २, २९; ३, १,७; मीसू १०,७,३५.

तुल्य-काल[g]– -लाः आगृ १, ३,९; –लानाम् मीसू ५,१, ८.

तुल्यकाल-त्व– -त्वात् पावा ४,३, १०५; मीसू ३, ५, ५१; १०,८,८.

तुल्य-क्रि(या>)य– -यः पा, पावा ३,१,८७.

तुल्य-गात्रक[g]– -काः अप ६९,३,४.

तुल्य-गुण[g]– -णेषु आपध २, १७,१०; हिध २,५,३९.

तुल्य-चोदन– -नात् लाश्रौ ८,१,१०.

तुल्य-तस्(:) वाध १७,२३.

तुल्य-त्व– -त्वात् मीसू १,४, ७; ३,६,७; १०,७,३१;८,२४.

तुल्य-देश-प्रयत्न– -त्नम् पावा १,१,९.

तुल्य-दोष[g]– -षः वाध २०, ३०.

तुल्य-धर्म-त्व– -त्वात् मीसू १०,५,७१.

तुल्य-नामन्[g]– -मानौ बृदे १, ९२.

तुल्य-निमित्त-त्व– -त्वात् पावा ३,१,३१.

तुल्य-प्रकृति-ता– -ता अप ६८,१,६.

तुल्य-प्रमाण[g]– -णानाम् काशु २, २१.

तुल्य-प्रमाणक-त्व– -त्वे कप्र ३,९,१७.

तुल्य-बल-त्व– -त्वात् पावा १,४,२.

तुल्य-बल-विरोध– -धे गौध १, ६.

तुल्य-भाज्– -भाक् गौध २८,३६.

१तुल्य-योग– -गे पा २, २,२८.

तुल्ययोगिन्– >°गि-त्व– -त्वात् मीसू २,१, ४६.

२ तुल्य-योग,गा[g]– -गा नाशि २,३,८; –गात् याशि १, १०; ५९.

तुल्य-रूप[g]– -पान् बृदे ५, ६७; –पे पाप्रवा ४,१३.

तुल्य-वत् आपश्रौ २४, २, ३७; मीसू.

तुल्य-वयस्[g,h]– -यसः बृदे ५,६८; –याः पागृ ३,८,१७.

तुल्य-वर्चस्[g]– -र्चसः अप ५२,८,१.

तुल्य-शब्द-त्व– -त्वात् मीसू ३,५,५४; ८,२,२६.

---

*a*) वैप १ द्र. *b*) तु. पागम.। *c*) कर्मणि ष्यञ् प्र.। *d*) नाप.। उस. उप. कर्तरि कृत्.। *e*) =(पञ्चदशाह्निक-) व्रत-विशेष-। *f*) तृस.>सस.>षस.। *g*) विप.। बस.। *h*) उप. = आयुस्-।

तुल्य-श्रुति-त्व- -त्वात् मीसू २,१,१०; ५,२,१८.

तुल्य-सं(ख्या>)ख्य[a]- -ख्यानाम् मीसू ११,४,४०.

तुल्य-संख्यान- -नात् मीसू ४,४,१५.

तुल्य-संनिपात- -ते लाश्रौ ६,९,८.

तुल्य-समवाय- -ये काश्रौ १,५,१०.

तुल्य-हेतु-त्व- -त्वात् मीसू ९,१,५०; १०,८,३.

तुल्या(ल्य-अ)पकृष्ट-वध- -धे बौध १,१०,२०.

तुल्या(ल्य-अ)र्थ[a]- -र्थानाम् वाश्रौ १, १,१, ६९; कौसू ६३, १७; -र्थैः पा २,३,७२.

तुल्यार्थ-तृतीया-सप्तम्यु (मी-उ) पमाना (न-अ) व्यय-द्वितीया-कृत्य- -त्याः पा ६, २, २.

तुल्या(ल्य-आ)स्य-प्रयत्न- -त्नम् पा १,१,९.

तोल्य- -ल्यः अप ११,२,१.

२तुल-(>२तुल्य- पा.) पाग ४, २, ८०.

तुलभ-(>°भीय- पा.) पाग ५, ३, ११६.

तुलभ्य[b]- -भ्याः बौश्रौप्र ३६ : १.

तुलसी[c]- > °सी-दल-भक्षण- -णम् शंध १२९.

तुलसी-भू-महादेवी-चूर्ण-स्पृष्ट- -ष्टः अप ३५,२,१०.

१तुल्य- √तुल् द्र.

२तुल्य- २तुल- द्र.

तुल्वल[b]- पाउभो २,३,१२३.

तौल्वलि- पाग २, ४, ६१; -लिः आश्रौ २,६,१७; ५,६,२४.

तौल्वलायन- पा २,४,६१.

†तुवि[d]- -वि अप ४८, ६६; निघ ३,१.

तुवि-कूर्मि[d]- -र्मिः शांश्रौ १८,७,५†

†तुवि-क्ष[d]- -क्षम् या ६,३३ф.

†तुवि-क्ष(त्र>)त्रा[d]- -त्राम् आश्रौ २,१,२९; शांश्रौ २,२,१४.

†तुवि-जात[d]- -तः वैश्रौ १८, १ : १५; या १२,३६ф.

तुवि-नृम्ण[d]- -म्णः आपश्रौ १२, १४,१५†.

†तुवि-शुष्म[d]- -०ष्म शांश्रौ १०, १३,९; -ष्मः शांश्रौ १५,२,१.

†तुवि-श्रवस्[d]- > °स्-तम- -मम् आश्रौ २,१०,९; काग्ट ३२,३.

तुवि-ष्वण(<स्वन)स्[d]- -णसम् माश्रौ ५,१,२,१७†.

तु(वि>)वी-मघ[d]- -०घ भाशि ३९†.

तु(वि>)वी-रव[d]- -वम् ऋप्रा ९, २†.

तुविस्-[d]>तुविष्ट(स्-त)म[d]- -मः शौच ३,९६†[e].

तुविष्टम-वर्जम् शौच ४,५९.

√तुश्[d]>तोश[d]- -शा आश्रौ ५, १०, २८; शांश्रौ १२, २, १८; साम्र २,१०५२[२].

तु-शब्द तु. द्र.

√तुष् पाधा. दिवा. पर. प्रीतौ, तुष्यति आग्निगृ २,५,१ : ४७; जैगृ २,९ : ३५; कप्र २,१०, ६; अप ७०[३], २९, २; आज्यो ११, ५; तुष्यन्ति नाशि १, ५, १६; तुष्येत् शांश्रौ १, १७, ५; तुष्येरन् अप १३,४,८; तुष्येयुः अप ३०,४,१; ७०,३,३; अशां २५,३.

अतोषयत् बृदे ४,५८.

तुषित[f]- -०त विध ९८, ४७.

तुष्ट- -ष्टः आग्निगृ २, ५, ४ : १७; बौगृ; -ष्टाः अप ५,५,२; १३, ५,१; विध १९,२३; -ष्टे ऋअ ३,१; -ष्टेषु विध १९,२३.

तुष्ट-तम- -माः विध १९,२३.

तुष्टि- -ष्टिः कप्र १,१,१२; आपध १, २३, ६; हिध १, ६, १४; -ष्टिम् अप ६८, २, २५; बौध २,५,२४†.

तुष्टि-ऋद्धि- -द्धौ आग्निगृ २, ३,३ : २७.

तोषयित्वा आपध २,१३,१२; हिध.

तोषित- -तः कप्र २,१०,७.

तुष[d]- पाग ४, २, ८०[g]; -षम् कौसू ६१, २५; -षाः आपश्रौ ८, ७, १५; भाश्रौ; -षाणाम् आपश्रौ ८, ८,१२; बौश्रौ २०, ७ : १०; -षान् काश्रौ २,४,१९; आपश्रौ; -षैः आपश्रौ ८, ७,१४; बौश्रौ.

तौषायण- पा ४, २,८०.

तुष-केश-पुरीष-भस्मा(म-अ)स्थि-श्लेष्म-नख-लोम- -मानि शंध ८७.

तुष-धान्य-वर्जम् बौध ३,३,७.

तुष-निष्कास- -सम् आपश्रौ ८,८, १३; भाश्रौ ८, १०, १३; माश्रौ १,७,४,३४?[h]; वैश्रौ ८, १४ : ६; -सस्य माश्रौ १,७,४,४०?[h].

*a*) विप. । बस. । *b*) = ऋषि-विशेष- । व्यु. ? । *c*) = ओषधि-विशेष- । व्यु. ? । *d*) वैप १ द्र. । *e*) पाभे. वैप १,१४९१ q द्र. । *f*) = विष्णुनामाऽन्यतम- । व्यु. ? । *g*) अर्थः ? । *h*) °ष्काष- (लैवि.) इति पाठः ? यनि. शोधः ।

†तुष-प(क्व>)क्का[a]— -क्काः काश्रौ १७, १, २३; आपश्रौ १६,१५, ८; बौश्रौ १०, १९ : ३; २२ : ९; माश्रौ ६, १, ४, ३९; वाश्रौ २,१,४,२३; वैश्रौ १८,१३ : ७; हिश्रौ ११,६,५.
तुष-प्रतिपादन— -नम् हिश्रौ ५, ३, ४८.
तुष-विहीन— -नान् बौध ३,२,१०.
तुषा(ष-अ)ग्नि— -ग्निना आग्निगृ ३, १०, ४ : २०; –ग्निम् आग्निगृ ३,१०,४ : ५.
तुषा(ष-आ)द्य(दि-अ)ग्नि—प्रविष्ट— -ष्टानाम् काध २७४ : १.
तुषा(ष-आ)पूरित— -तेन वैश्रौ ४, ७ : ९.
तुषो(ष-उ)पवपन— -नम् आपश्रौ ६,२९,१७.
तुषार[b]— पाउ ३, १३९; –रेण अप ६८,१,३१.
तुष्टुवस्— √स्तु द्र.
√तुस् पाधा. भ्वा. पर. शब्दे.
तुस्तूर्षमाण— √स्तृ, तॄ द्र.
√तुह् पाधा. भ्वा. पर. अर्दने.
तुहिन— पाउ २,५२.
तुहिहवैतच्छब्द—विशिष्ट— तू,तु द्र.
तूख[c]— -खानाम् चाअ ९ : १; १० : २; ३९ : १०; ४१ : १४; १८; १९;२२.
√तूड् √तुड् टि. द्र.
√तूण् पाधा. चुरा. आत्म. पूरणे.
तूण[d]— पाउभो २,२,१२३; पाग ४,१, ४१; –णम् शुअ ३, ११९; –णात् अप ६७, ६,५.
तूणी— पा ४,१,४१.
तूणी-बन्ध— -न्धः बौश्रौ १८, ३५ : ८.
तूणकर्ण— (>तौणकर्ण)— तृणकर्ण— टि. द्र.
†तूणव[a]— -वम् कागृ १७, २; –वान् आपश्रौ २१, १७, १७; १९,४; –वे तैप्रा १३, १२; –वेषु या १३,९.
तूणव-ध्म[a]— -ध्मम् शुप्रा ५,५†.
तूणीर[d]— पाउत्र ४, ३०; –रात् अप ७१,१४.४.
तूतुजान—, तूतुजि— √तुज् द्र.
†तूतुम[a]— -मा या ५,२५ф.
तूतोत् √तु द्र.
तूपर[a]— -रः आश्रौ १०,९, ५; शांश्रौ; –रम् आपश्रौ १६, ७, १××; बौश्रौ; –रस्य †आपश्रौ २०, १९,३[२];९; काश्रौसं; –राः शांश्रौ १५, १, २२; आपश्रौ; –रान् आपश्रौ १८, २, १३; वाश्रौ ३, १, १, २०; –राय बौश्रौ २६, १०:१९; –रेण विध ८०,११.
तूपर-गोमृग— -गयोः आपश्रौ २०, १८,८; हिश्रौ १४, ४,१७.
तूपर-मिथुन—दक्षिणा[e]— -णा काश्रौ १८,६,२३.
तूबर— पाउभो २, ३,७४.
†तूय[f]— -यम् अप ४८, ७५; १०६; निघ १, १२; २, १५; या ३, २०; ५,२ф; ८,१३ф.
√तूर् पाधा. दिवा. आत्म. गतित्वरणहिंसनयोः.
तूर्ण— प्रभृ. √तुर् द्र.
†तूर्णा(र्[*]-ना)श[a]— -शम् निघ ४, २; या ५,१६ф.
तूर्णि— √तुर् द्र.
तूर्य[g]— -र्याणि अप ५, ४, ३; ७१, १५,४.
तूर्य-घोष— -षेण अप ४, २, १३; १९[२],५,१.
तूर्य-निर्घोष— -षः अप ७०[२], २,३.
तूर्य-माण⌊,न⌋— पावा ८, ४,१०.
तूर्यन्ती[h]— -न्तीम् आग्निगृ २, १, ३ : २; आपगृ १४,१४;भागृ१,२२: १०; वैगृ ३,१४:९; हिगृ२,२,८.
√तू(<तु)र्व्[a] पाधा. भ्वा. पर. हिंसायाम्,तूर्वति अप ४८,१९†.
तूर्व—>तूर्व-या(न>)ण[a]— -णम् शांश्रौ १४, ४९, ३†.
√तूल् पाधा. भ्वा. पर. निष्कर्षे.
तूल[i]— -लः आपमं २, १६, ८; हिगृ २,७,२; –लम् अप ११, २,४; आपध १,३२,२४[j]; बौध २,७, १५[k]; हिध १,८,६५?[l]; –लानि माश्रौ १,१, ३,२; –लेषु, –लैः माश्रौ १,१,३,१.
√तूलि पा ३,१,२५.
तूलि— पाउत्र ४,१२०.
√तूष् पाधा. भ्वा. पर. तुष्टौ.
तूष[a]— -षम् लाश्रौ ८, ६,२१†.
तूष्णीम्[a] आश्रौ १,३,२९××; शांश्रौ; पाग १,१,३७; तूष्णीम्ऽतूष्णीम् आग्निगृ ३,५,५ : १६.
तूष्णीं-शंस[m]— -सः आश्रौ ५, ९, ११; शांश्रौ ९, २५,१; १८, १, २; –सम् आश्रौ ५, ९,१; शांश्रौ ७,९,१; १७,१७,१५; १८,२१,

*a*) वैप १ द्र.। *b*) = हिम-। व्यु. ?<√तुष् इति प्रायोवादः। *c*) = ऋषि-विशेष-। व्यु. ?। *d*) = इषु-धि-। व्यु. ?। *e*) उप. = २दक्षिणा-। *f*) वैप १,१४९२ n द्र.। *g*) = वाद्य-विशेष-। व्यु. ?। *h*) = ओषधि-विशेष- ⌊अवका-⌋। व्यु. ?। *i*) बप्रा.। वैप १,१४९३ g द्र.। *j*) = आगामिनी- संपद्-। *k*) = इषीकाग्र-। *l*) कूलम् इति पाठः ? यनि. शोधः। *m*) ऋक्समूहसंज्ञा-।

१; -से शांश्रौ १७,१४,३.
तूष्णीं-स्तोम[a]- -मः बौश्रौ १६,८: ७; -मात् बौश्रौ २६, १४: १०; १४; -माय बौश्रौ १६, ७ : २.
तूष्णी-क,का- पावा ५, ३, ७२; -कः बौश्रौ २०, १६ : २५××; -कम्[b] आपश्रौ २१, ११,११; बौश्रौ; -का बौश्रौ २१, १९ : १०××; -काः बौश्रौ २१, १ : ७××; -कान् वाश्रौ १, ७, ४, १३; -कानि बौश्रौ २१, १ : ८; २२, २० : १५; २५, १ : १६; -काभिः हिश्रौ ७, ४,५८; -काम्[c] आपश्रौ १४,२३, ७; वाश्रौ १,१,१,२७;६,३,१; पावा ५, ३, ७२; -केन बौश्रौ २१, १६ : १२; वैश्रौ ३, ८ : २; हिश्रौ १, ३, ४९; ३, ८, १७; २२, ३, ७; -केषु आपश्रौ ३, १८,७; १४, २३, ५; भाश्रौ ३, १५,१; वैश्रौ २१,१० : ७; हिश्रौ १,१,२२; २, ८,८;१५,६,४.
तूष्णीं-न्याय[d]- -यम् कौगृ ५, ६,३.
तूष्णीं√भू > °भावम् पा ३, ४, ६३.
तूष्णीं-भूत- -ताः विध ८,३७.
तूष्णीं-भूत्वा, °भूय पा ३,४,६३.
तूस्त[e]- पाउभो २,२,१३४; पाग ६,२, १३४.
√तूस्त पा ३,१,२१.
√तृंह्,तह्[f] पाधा. तुदा.; रुधा. पर. हिंसायाम्, तृंहन्ति तैप्रा १६, २६†.
†तृणेढि अप ४८,१९; निघ २, १९; तृणहान् अप्रा २,४,१५†.
तृंहत्[g]- -हत् ऋप्रा ८,२७†.
√तृक्ष् पाधा. भ्वा. पर. गतौ.
तृक्ष[h]- पाग ४, १, १०५; -क्षम् आपश्रौ २४,८,८[i].
२तार्क्ष्य- पा ४, १, १०५; -०र्क्ष्य आश्रौ १२, १२, १; आपश्रौ २४,८,८; -र्क्ष्यम् आश्रौ १२,१२,१.
तार्क्ष्यायण- पाग ४,२,५४; -णाः बौश्रौप्र ७ : २.
तार्क्ष्यायण-भक्त- पा ४, २,५४.
तृक्ष-वत् आपश्रौ २४,८,८[i].
तृक्षाक[h]- (>तार्क्षाक- पा) पाग ४, १,११२.
तृच- त्रि- द्र.
?तृचि जैश्रौका ५३[i].
√तृण् पाधा. तना. उभ. अदने.
१तृण[g]- पाउ ५,८; पाग २,४,३१;४, २, ४९; ८०; ९०; ९१; ३,७६; १४४; ६, २, ८५; पावा २, ४, १२; पावाग ४, २,५१; -णम् आश्रौ १,३,३१××;शांश्रौ; -णस्य हिश्रौ ४,४,१५;-णानाम् बौश्रौ २०, ५ : १८; कौसू; -णानि आश्रौ १,३,२२; शांश्रौ; -णाभ्याम् काश्रौ ९, १४, ४; -णे काश्रौ २,६,९××; काठश्रौ; -णेन काश्रौ ४,१४,५; आपश्रौ; पावा १, ४, २३; -णेषु आश्रौ ८, १४, १३; १४; बौश्रौ; -णैः काश्रौ २, ३,६; आपश्रौ.
१तार्ण- पा ४, ३, ७६.
तृण-काण्ड- पावा ४,२,५१.
तृण-काष्ठ- पाग २, ४,११[j]; -ष्ठम् अप ५०,९,३; बौध २,१,५५[k]; -ष्ठेषु आपध १, १५, १४; हिध १,४,७३; -ष्ठैः आपध १, २१, २; हिध १,६,३१.
तृणकाष्ठा(ष्ठ-अ)पासन- -नम् काश्रौ ७,७,८.
तृण-काष्ठ-द्रुम-शुष्कान्न-गुड-वस्त्र-चर्मा(र्म-आ)मिष- -षाणाम् विध ५२,९.
तृण-काष्ठ-शुष्कपलाश- -शानाम् विध २३,१६.
तृणकीय- पा ४,२,९१.
तार्णक- पा ६,४,१५३.
तृण-कूर्च- -र्चेन जैगृ १,३ : २४.
तृण-च्छेदन- > °न-लोष्टविमर्दन-[नि[l]]ष्ठीवन- -नानि आपध १, ३२,२८; हिध १,८,६९.
तृण-च्छेदिन्- -दी विध ५, ५८; ७१,४३.
तृण-जम्भ- पा ५,४,१२५.
तृण-जय[m]- -याय बौगृ ३,९, ५.
तृण-निरसन- -नम् शांश्रौ ४,६,५.
तृणनिरसना(न-आ)दि- -दि वैश्रौ १५, २४ : ४;५.
तृण-प(द् > )दी- पाग ५, ४, १३९.
तृण-पाणि[n]- -णिः ऋअ २,५,४९

---

*a*) = स्तोम-विशेष-। *b*) प्रायेण द्वि१ सत् क्रिवि.। *c*) वा. क्रिवि.। *d*) विप.। बस.। *e*) अर्थः व्यु. च ?। = जटीभूत-केश- इति पासि., = धूलि- इति MW.। *f*) पा ७,३,९२ परामृष्टः द्र.। *g*) वैप १ द्र.। *h*) व्यप.। व्यु. ?। *i*) °क्षु° इति पाठः ? यनि. शोधः (तु. सप्र. आश्रौ १२, १२,१; C. च)। *j*) तु. पागम.। *k*) तृणं, का° इति चौसं.। *l*) हिध. पाठः। *m*) = ऋषि-विशेष-। *n*) व्यप. (तु. साअ. बृदे.; वैतु. षड्गुरुशिष्यः विप. इति)। बस.।

साश्र १,४१.

**तृणपाणि-क**– -**कम्** ऋअ २, ६,४८; –**कस्य** बृदे ५, ११३.

**तृण-प्रासन-प्रभृति**– -**ति** द्राश्रौ ४, १,१५; लाश्रौ २,२,३.

**तृण-बि(,वि[a])न्दु[b]**– पाग ४,१,९६; पावाग ४,२,२८; –**न्दवः** बौश्रौप्र २७ : २; –**न्दवे** आग्निगृ १, २, २ : १८; बौगृ ३, ९, ५; भागृ ३,१० : ४; हिगृ २,१९,६.

**तार्णबि(,वि[a])न्दवि**– पा ४, १,९६.

**तार्णबिन्दवीय**– पावा ४, २, २८.

**तृणबिन्दु-तनु**– पाग २, २, ३८[a].

**तृण-मूस्य(मि-अ)ग्न्यु(ग्नि-उ)दक-वाक्सूनृता(ता-अ)नसूया**– -**याः** वाध १३,६१.

**तृण-मय**– पा ४, ३,१४४.

**तृण-मुष्टि**– -**ष्टिम्** बौश्रौ २, ८ : ४; २४; वैगृ २,१६ : ७.

**तृण-वंश**– -**शम्** बौश्रौ २५,४ : ४.

**तृण-वर्त[c]**– -**र्तान्** बौश्रौ ६, २७ : २०.

**तृण-वल्ली-समाकु(ल>)ला**– -**लाम्** अप ७०[२],२३,१०.

**तृण-श**– पा ४, २,८०.

**तृण-शायिन्**– -**यी** विध ५०,४.

**तृण-संवाह**– -**हः** आपध १, ११,८; हिध १,३,६५.

**तृण-हिरण्य**– -**ण्यैः** काश्रौ १२, ६,१.

**तृणा(ण-अ)ग्र**– -**ग्रम्** काश्रौ ६, ६, १४; वाश्रौ १,३, १,३३; ६,५, २१; –**ग्राणि** वाश्रौ ३,२,६,४६.

**तृणा(ण-अ)द्**– -**दान्** अप ७१, ५,३.

**तृणा(ण-आ)दि**– -**दि** काश्रौ ३, ७, १३; –**दीनाम्** अप ६४,५,१०.

**तृणा(ण-अ)द्य**– -**द्यात** आपश्रौ २०, २,११[२]; हिश्रौ १४, १,२३[२].

**तृणा(ण-अ)न्तर्धान**– -**नेन** वाश्रौ ३, २,१,१८.

**तृणा(ण-अ)पचयन**– -**नम्** शांश्रौ २, १५,३.

**?तृणापल**– तृणोलप– टि. द्र.

**तृणा(ण-अ)र्थ**– -**र्थे** काश्रौ २,८,७.

**तृणिल**– पा ४,२,८०.

**तृणीय**– पा ४, २, ९०.

**तृणे(ण-इ)द्ध**– -**द्धः** हिश्रौ १५, ३, ११[d].

**तृणै(ण-ए)ध[e]**– -**धः** भाश्रौ ९,१३, ९[d]; –**धे** आपश्रौ ९,९,१२[d].

**तृणो(ण-उ)दक**– -**काय** बौश्रौ ६, ९ : ७.

**तृणो(ण-उ)दक-भूमि**– -**मि** गौध ५, ३६.

**तृणो(ण-उ)लप[f]**– पाग २,४, ११.

**तृणौ(ण-ओ)षधि**– -**धीनाम्** बौध ३,२,१५.

**तृण्य**– पा ४,२,४९.

**२तृण[g]**– पाग ४, १,९९;११२[h].

**२तार्ण**– पा ४,१,११२.

**तार्णायन**– पा ४,१,९९.

**तृणकर्ण[g]**– पा, पाग २, ४, ६३; ४, १,११२[h,i].

**तार्णकर्ण**– पा ४,१,११२.

**तृण-काष्ठ**– प्रभृ. १तृण– द्र.

**तृणव[j]**– (>°वीय– पा.) पाग ४, २, ९०.

**?तृणवः** अप १,७,५.

**?तृत**– -**ते** कौसू ४६,२६†[k].

**तृतीय**– प्रभृ. त्रि– द्र.

**?तृत्यम्** वाश्रौ ३,२,५,२६.

**तृत्सु[l]**– -**त्सवः** या ७,२†.

**√तृद्** पाधा. रुधा. उभ. हिंसानादरयोः, अतृणत ऋप्रा १,९८†; तृन्द्यात या १,१२.

ततर्द या १०,४१†ф.

†**तर्द[l]**– -०र्द अअ ६, ५०; –**र्दम्** कौसू ५१, १७; १९; अप ३२, १,१२; अअ ६,५.

?तर्दापते[l] अअ ६,५०†.

**तर्दन[m]**– -**नम्** या १, १३.

**तर्द्मन्[l]**– -**र्द्म** काश्रौ ६,१,२८; कागृ २५,९†[n]; कौसू ७६,१३; –**र्द्मसु** काश्रौ ७,३,१७; कागृ २६,३†.

**तृद्मन्[l]**– -**द्म** आपमं १,१,१०†[n].

**√तृप्, तृम्प्[o]** पाधा. दिवा. स्वा. पर. प्रीणने; तुदा. पर. तृप्तौ; चुरा. उभ. तृप्तौ संदीपने च, **तृप्यति** बौश्रौ १०, १० : १; २७, १२ : ९; माश्रौ; **तृप्यन्ति** बौश्रौ २७, १२ : ६;८; वाधूश्रौ; **तृप्यामि** गोगृ १,९,३; **तृप्यामहे** विध ८३,२१; **तृप्यतु** आश्रौ ५, ६,२†; शांश्रौ; †**तृप्यताम्** अप ४३, २, १५××; †**तृप्यन्ताम्**

---

*a*) तु. पागम. । *b*) = ऋषि-विशेष- । व्यु. ? । *c*) = तृण-पूल- । *d*) सपा. **तृणेद्धः** <> **तृणैधः** <> **तृणैधे** इति पाभे. । *e*) विप. । बस. । *f*) **तृणापल**– [पक्षे] इति भाण्डा. । *g*) व्यप. । व्यु. ? । *h*) **तृण-, कर्ण**– इति भाण्डा. पाका., **तृणकर्ण**– इति पासि. । *i*) **तृण°** इति पाका. । *j*) तु. पाका. । *k*) पाठः ? **त्रिते** इति शोधः (तु. शौ ६,११३,१) । *l*) वैप १ द्र. । *m*) =१तृण- । *n*) पाभे. वैप १, १४९४ n द्र. । *o*) या १०, १० पाग ८, ४, ३९ पावा ३, १, ४४ परामृष्टः द्र. ।

१९; विध ९०,१०; २८.
धर्म-रुचि[a]– -चिः आपध १,५, ११; हिध १,२,११; –चये बौगृ २,८,९†[b].
धर्म-लक्षण– -णानि शंध ६.
धर्म-लाभ– -भः काश्री ४, ३, १९; मीसू ७,४,१८.
धर्म-वत् पा ४,२,४६.
धर्म-वत्– >धर्मिष्ठ– -ष्ठान् विध ३,१७.
धर्म-वसु-प्रद्– -॰द् विध ९८, ९१.
धर्म-वाद– -दः वाध १७,७१.
धर्म-विच्छित्ति– -त्तिः सुधप ८८ : १.
धर्म-विद्– -वित् कप्र ३,१,६; ९,३; बौध; –विदः वाध १, १६; २८,७; सुध १५; –विदा वाध ६,९.
धर्म-विद्या– (>धार्मविद्य– पा.) पावा ४,२,६०.
धर्म-विधान– -नात् मीसू ११, ३,५; –नानि मीसू २,३,२३.
धर्म-विनियोग– -गे वाश्रौ १, १,१,६८.
धर्म-विप्रतिपत्ति– -त्तौ आपध १,४,१२; हिध १,१,१३१.
धर्म-विप्रतिषेध– -धात् मीसू ३, ३, ४०; ११, ३, १२; –धे वाश्रौ १,१,१,७०.
धर्म-विरुद्ध– -द्धौ विध ७१,८४.
धर्म-विशेष– -षः मीसू २, १, ३९; –षात् मीसू २, १, ३६; १०,५,६३.
धर्म-वृद्धि– -द्धिः गौध २८,४.
धर्म-व्यतिक्रम– -मः आपध २, १३,७; हिध २,३,७; गौध १, ३; –मे बृदे ८,३.
१धर्म-व्यपेक्षा– -क्षया बौध २,२,७१.
२धर्म-व्यपे(क्ष>)क्षा[a]– -क्षासु विध ९९,२२.
धर्म-व्यवस्था– -स्था गौध ११, २४.
धर्म-शास्त्र– -स्त्रम् अप ४४, ४,२; वाध; –स्त्रस्य विध ८३, ८; –स्त्राणि शंध ३; गौध ११, २१.
धर्मशास्त्र-त्व– -त्वात् मीसू ६,७,६.
धर्मशास्त्र-रति[a]– -तिः शंध १९९.
धर्मशास्त्र-रथा(थ–आ)रूढ– -ढाः बौध १,१,१४.
धर्मशास्त्र-विद्– -वित् अप ४४,२,४.
धर्म-शील-वर्णा(र्ण–अ)न्त– -न्तात् पा ५,२,१३२.
धर्म-शेष– -षान् आपध २, २९,१५.
धर्म-संयुक्त– -क्तम् शंध ४४३.
धर्म-संशय– -यात् बौध २, ९, ४.
धर्म-सत्य–मय– -यः विध १, ५.
धर्म-संतति– -तिम् बौध १, ४,२४.
धर्म-संतान– -नात् या ६,१९.
धर्म-सं(धा>)ध[c]– -धम् शंध ११६ : २९.
धर्म-संनिपात– -तः हिध १, ७,४६[d].
धर्म-संनिवाप– -पः आपध १, २८,१०[d].
धर्म-समाप्ति– -प्तिः आपध २, २९,१३.
धर्म-संबन्ध– -न्धः हिध २, ५, २२०[e]; मीसू ९,१,३.
धर्म-साधन– -नम् शंध ५.
धर्म-सावर्णि[f]– -र्णम् शंध ११६: ४६.
धर्म-सू[g]– -सुवः बौश्रौ १२, ११ : १†.
धर्म-स्थान– -नम् शंध २५६.
धर्म-स्थूणाराज– -जम् पागृ ३, ४,१८[h].
धर्मस्य-तनू[i]– -न्वौ द्राश्रौ २, २,२७; लाश्रौ १,६,२५.
धर्म-हानि– -निः आपध १, २०,४, हिध १,६,१८.
धर्म-हीन– -नः गौध ४,२५.
धर्मा(र्म-अ)ङ्ग– -॰ङ्ग विध १, ५४; ९८,९०.
धर्मा(र्म-अ)तिक्रम– -मे आपध १,१३,४; हिध १,४,१८.
धर्मा(र्म-आ)दि– -दिषु पावा २,२,३४.
धर्मा(र्म-अ)धर्म– -र्मयोः कागृ ५४,६; विध ६७,१०; –र्माभ्याम् कौसू ७४, ५; –र्मौ वैगृ ५,१ : २८; ८ : १; आपध.
धर्माधर्म-ज्ञ– -॰ज्ञ विध १, ५४.
धर्मा(र्म-अ)नुग्रह– -हात् मीसू ८, १,३६; ४२;२,२३.

---

a) विप. । बस. । b) =देवता-विशेष- । c) व्यप. । बस. । d) परस्परं पाभे. ।
e) पाभे. पृ १३५४ o द्र. । f) =मनु-विशेष- । g) उप. < √सू [प्रेरणे] । h) पाभे. पृ १३५४ k द्र. । i) =साम-विशेष- ।

धर्मा(र्म-आ)नुपूर्व्य- -र्व्येम् आपश्रौ २१,३,१०.
धर्मा(र्म-अ)नुबोधन- -नम् वैध ३,१३,९.
धर्मा(र्म-अ)नुवर्तिन्- -र्तिनौ वैगृ ३,१:५.
धर्मा(र्म-अ)नुष्ठान- -नम् आपध २, २, ३; हिध २, १, २५.
धर्मा(र्म-आ)म्नाय- -ययोः पावा ४,३,१२०.
धर्मा(र्म-अ)र्जित-धन- -नम् शंध ८८; -नस्य आग्निगृ २, ५,१:५२.
१धर्मा(र्म-अ)र्थ[a]- -र्थम् आपध २, ६, १; १३,११; विध; हिध २,३,११[b].
२धर्मा(र्म-अ)र्थ[c]- -र्थम् कौगृ ३, ११, ६[d]; -र्थे गौध १७, ३५.
३धर्मा(र्म-अ)र्थ[e]- पाग २, २, ३१[f]; -र्थाभ्याम् वाध १७,१७; -र्थौ बौध १,२,४९; विध २९, ८.
धर्मार्थ-कुशल- -लम् आपध २, १०, १४; हिध २, ४, १४; -लान् हिध २,५,१९९.
धर्मार्थ-युक्त- -क्तैः आपध १,४,२३; हिध १,१,१४२.
धर्मार्थ-विषय- -येषु शंध २५१.
धर्मार्थ-संनिपात- -ते आपध १,२४,२३; हिध १,६,७१.
धर्मार्थ-हारक- -कान् विध ५,१९२.
धर्मा(र्म-अ)र्थ-कर्मन्- -र्मणाम् आज्यो १४,७.
धर्मा(र्म-अ)र्थ-काम- -मेभ्यः गौध ९,४८.
धर्मार्थकाम-युक्त- -क्तानि आज्यो १४,६.
धर्मार्थकाम-संयुक्त- -क्तम् अप ५,१,१.
धर्मा(र्म-अ)विप्रतिषिद्ध- -द्धान् आपध २,२०,२२; हिध २,५, १०७.
धर्मा(र्म-आ)वेश- -शः हिश्रौ ३, ८,४३; ४७![g].
धर्मा(र्म-आ)हृत- -तेन आपध २,१६,२५; हिध २,५,२४.
√धर्मि, धर्मयेयुः वाध १५, १५.
धर्मयत्- -यन्तः वाध १५, १६.
धार्मिक- (>धार्मिक्य- पा.) पाग ५,१,१२८.
धर्मिन्- पाग ४, २, ३८; -र्मि निसू ८, १०:३२; -र्मिणः हिश्रौ ६,६,१७†; जैश्रौका ६९; ७२; पागृ २, ११, १२[h]; -र्मिणाम् गौध २८,५४; -र्मिणि निसू ८, १०:३२; -र्मी निसू १०,७:२३.
धर्मिणी[i]-(>धार्मिणेय- पा.) पाग ४,१,१२३.
धार्मिण- पा ४,२,३८.
धर्मि-स्थान- -नम् निसू ७, १३:६; १४[२].
धर्मे(र्म-ई)प्सु- -प्सुः बौध १, ५,४७; -प्सोः शंध ४१४.
धर्मो(र्म-उ)त्कट- -टे विध ९९, १९.
धर्मो(र्म-उ)त्तर[j]- -रः गौध ९, ४९.
धर्मो(र्म-उ)त्सादना(न-आ)दि- -दि आश्रौ १२,४,१०.
धर्मो(र्म-उ)दय- -यः शंध ६.
धर्मो(र्म-उ)पदेश- -शात् आपध १, ३२, १२; हिध १, ८, ५४; मीसू ३,३,४.
धर्मोपदेश-कारिन्- -रिणः विध ५,२४.
धर्मो(र्म-उ)पदेशन- -ने पावा ६, १,८३.
धर्मो(र्म-उ)पनत- -तस्य आपध १,१८,१४; हिध १,५,८३.
२धर्म्य, र्म्या- पा ४, ४, ९१; ९२; -र्म्यैः हिध १, ४, ८१[k]; -र्म्यम् वैध २, ९, १; हिध १, २, ७८[l]; २,५,२०४[m]; पा ४, ४, ४७; -र्म्या गौध १२, २६; -र्म्याः विध २४, २७; गौध ४, १४; -र्म्ये पा ६,२,६५; -र्म्येषु गौध ५, २०.
धार्म्य[n]- -र्म्यैः आपध १, १५, २२[k]; -र्म्यम् वाधूश्रौ ३, ७५:८; १०; बौगृ ३,३,३३, आपध १, ७,२१[l]; २९,८; २, २६,९[m]; हिध १, ७, ६५.

---

*a*) चस.। *b*) पाभे. पृ १३५४ n द्र.। *c*) षस. उप. =तत्त्व- वा प्रयोजन- वा। *d*) न धर्मार्थं जुगुप्सेत इत्यस्य स्थाने सप्र. शांगृ ४, १२, ८ अधर्माच्च जुगुप्सेत इति पाभे.। *e*) द्वस.। *f*) [पक्षे] भाण्डा.। *g*) °वेषः इति पाठः? यनि. शोधः। *h*) सपा. धर्मिणः <> धर्मणस्पते <> धर्मणा इति पाभे.। *i*) व्यप.। *j*) विप.। बस.। *k*) सप्र. ध° <> धा° इति पाभे.। *l*) सपा. ध° <> धा° इति पाभे.। *m*) सपा. ध° <> धा° इति पाभे.। *n*) =२धर्म्य-। अण् प्र. वा धर्म- + स्वार्थे ष्यञ् प्र. वा।

धर्मन्[a]– पाग ४, २, ३८; –र्मे आपश्रौ १, २३, १†; बौश्रौ; –†र्मणः आश्रौ ६, १२, १२; शांश्रौ ८, १०, १; आपश्रौ ६, १९, १; १३, १८, २; बौश्रौ ८, १८ : ६; माश्रौ १, ६, २, १४; २, ५, ४, १३; हिश्रौ ९,४, ५८; वैताश्रौ २३, १५; –†०र्मणः[b] आपश्रौ १३, १८,२; बौश्रौ ८,१८ : ६; हिश्रौ ९, ४, ५८; –†र्मणा आश्रौ ४, ११,६[२]; ६, १२,१२[b,c]; शांश्रौ ८,१०,१[b]; बौश्रौ; माश्रौ २,५, ४,१३[b,c]; जैश्रौ ६ : ७; वैताश्रौ २३,१५[b,c]; आपमं २,३,१२[d]; कौगृ २,२,११[d]; शांगृ २,३,१[d]; आग्निगृ ३,६,१ : ७[e]; ८,२ : ५२; बौपि १, ८ : ६; १५ : ५८; हिगृ १,५,१०[d]; जैगृ १, १२ : २९; –†र्मणि आश्रौ ५, १८, २; शांश्रौ; या ११,१२; –†र्मणे बौश्रौ ८, १२ : २६; वैश्रौ १६, १४ : ६; वैताश्रौ २०, १३; या ७,२५φ; –†र्मा ऋप्रा ८,५०[f]; –†र्माणम् हिश्रौ १२,६, ६; या ९,२५φ; –†र्माणि आपश्रौ १२,१९,५; या १२,४१[g].

धर्म-विधर्मन्[h]– -र्मणी लाश्रौ ७, ७,१९.

धर्य[i]– -र्यः शांश्रौ ८,२४, ३†.

धार(क>)का[j]– पावाग ७, ३,४५.

धा(रक>)रिका[k]– -का जैगृ १, २१ : २५.

धारण[l]– -णः बौगृ २, ५, २९; –णम् काश्रौ ३,३, १; १६, ५, ८; बौश्रौ; ऋप्रा १४, १८[m]; –णात् अप ३५,२,१०; वैध ३, ७,१३; शुप्रा ४,१४४; –णाय बृदे ७,१०१; या ७, २५; –णे गौध १२, ४; मीसू ९, ४, २७.

धारणी– -णी अप ३१,३,३.

धारण-क्रिया– -या पावा १, ४, २३.

धारणा(णा-अ)र्थ– -र्थम् मीसू १०,१,४७.

धारणार्थ-त्व– -त्वात् मीसू १२,१,१९.

धारणीय– -यम् विध १००, ३.

धारणो (णा-उ) पस्थान– -नम् काश्रौ ४,९,२०.

धारणा– -णा शंध ३७२φ; बौध १, ५,१९; विध ६४, ४१; माशि १६,६φ; –णाम् कौगृ २, ५,१; शांगृ ४,९,३; अप ४३,२,५०†; –णायै[n] आगृ ३,५, ४; वैगृ २, १२ : ९.

धारणा-विशेष– -षात् मीसू ३, ३,२८[o].

धारय– पा ३,१,१३८.

धारयत्– पा ३,२, १३०; –यतः विध १०,९; –यन् आश्रौ १,१, २३××; शांश्रौ; –यन्तः आश्रौ ४, २, ५†; शांश्रौ; –यन्तम् काश्रौ २६,३;५; कौसू २०,१६; १३७,३०[p]†.

धारयद्-वत्– -वद्भयः बौश्रौ १३, २१ : २.

धारयद्वती[q]– -त्या माश्रौ ५,१,८,९; १०; १४; –त्याम् माश्रौ ५,१,८,१८.

धारयद्वतीय– -यम् आपश्रौ १९,२०,५; हिश्रौ २२,३.२२?[r].

धारयति–> °ति-कर्मन्– -र्मणः या २,२.

धारयमाण,णा– -णः आपश्रौ १, १६, ८; २, ४, २××; बौश्रौ; –णम् वैश्रौ ६,१२ : ५; –णाम् आपश्रौ १२, ५, ३; हिश्रौ ४, ४,६.

धारयितुम् वाधूश्रौ ३,१०४ : २.

धारयितृ– -ता या १२,३०; –तारः या ८,७; –तारम् या ९,२५.

धारयित्वा आग्निगृ १, २, २ : ३; २,६,२ : २३; ८ : २८; कागृ.

धारयिष्णु– -ष्णु मागृ २,११,६.

धारि(न>)णी– -णी शंध ४२.

धारित,ता– -तः बौश्रौ २९, १२ : ७; –ता माशि १६, २; –ताः कप्र ३,७,१३.

धार्य– -र्यः वैश्रौ १, २० : १४; आग्निगृ; –र्यम् भागृ १,१ : ९; वैगृ ४, १ : २०; ६, १६ : ११; कप्र १, १, ३; –र्याणि नाशि २, ७, ८; –र्यौ माशि १, १९; नाशि १,६,३.

---

*a*) वैप १ निर्दिष्टयोः समावेशः द्र. । *b*) पाभे. पृ १३५७ h द्र. । *c*) पाठः? **धर्मणः** इति शोधः (तु. टि. ?महा) । *d*) पाभे. वैप २,३खं. कर्मणा मंब्रा १,६,१५ टि. द्र. । *e*) पाभे. वैप १,१७३६ q द्र. । *f*) वैप १, १७३७ k द्र. । *g*) < धर्म- इति पाप्र. (२, ४, ३१) । *h*) सामविशेषयोः द्वस. । *i*) यत् प्र. (पा ३, १,९७) । *j*) तु. पागम. । *k*) नाप. । *l*) भावे कर्तरि च कृत् । *m*) =अनुपलब्धि- वा द्विर्वचन-वा । *n*) =देवता-विशेष- । *o*) °णार्थवि° इति जीसं. । *p*) पाभे. वैप १,१७३३ a द्र. । *q*) =ऋग्-विशेष- । *r*) **अध्यधारयद्वतीम्** इति पाठः? यनि. शोधः (तु. आपश्रौ.) ।

घार्यमाण,णा- . -णम् आपश्रौ ९, १३, ८××; वैश्रौ; विध ९६, ५५[a]; -णाः आपश्रौ १२,६,३; -णाय शांश्रौ ३,१३,१७; -णे आपश्रौ ७,६,२; १७;२५,१; माश्रौ.

घृत, ता- -†तः आपश्रौ ३, ११, २[b]××; बौश्रौ १, २१ : १८[b]; हिश्रौ २,६, २[b]; आग्निगृ १, ६, ३ : ५६[b]; २, ७, २ : २४[b]; बौगृ २, ६, २९[b]; तैप्रा १८, ३$[c]; माशि १८; -तम् कप्र १, १,३; शंध ११६ : ५२[d]; विध; -तस्य हिश्रौ १३,५,१४; -†ता बौश्रौ ६,१२ : ८; वाधूश्रौ; -ताः वैश्रौ २१, ९ : ८; बौध ४, १, २९; या १०,४४[२]; -तान् वैध २, ११, ६; -तानि वेज्यो २४; -तायाम् वैश्रौ ११, ५ : ५; -तेन वैश्रौ १८,१८:१३; -तैः कप्र १,२,४.

घृत-क्रतु[e]-> घार्तक्रतव- -वः वाधूश्रौ ४,१०८ : ३.

घृत—तीक्ष्णा(क्ष्ण-अ)र्क-किरण[f]- -णे अप ६३,१,८.

घृत-दण्ड[g]- -ण्डाः वाध १९, ४५.

घृत-राजन्[e]- >घार्तराज्ञ- पा ६,४,१३५.

घार्तराज्ञी[h]- (>°ज्ञक- पा.) पाग ४,२,१२७.

घृत-राष्ट्र- -०ष्ट्र आपमं २, १७, १०[i]; -ष्ट्रः[i] बौश्रौ १७, १८ : १; आपमं २, १७,९, बौगृ ३, १०, ६; अअ ८,१० (५)†[a].

घार्तराष्ट्र[j]- -ष्ट्रे कौसू २०, ६†.

घार्तराष्ट्री- (>ष्ट्रक-)

घार्तराज्ञी- टि. द्र.

घृत-व(त्>)ती- -तीम्[k] तैप्रा २३, २४[२]; कौशि ६७; -त्यः[l] निसू ८,४ : ११.

†घृत-व्रत[m]- -तः आपश्रौ ५, १९,२;१०,३०,१५××; बौश्रौ; -०ताः ऋअ २,२,२९; बृदे ४, ८४; शैशि १८५; -ताय शांश्रौ १४,५२,५; १३; -ते तैप्रा ४, ११; -तौ गौध ८,१$.

घृता(त-अ)र्चिस्- -र्चिषम् विध १,५९.

घृतो(त-ऊ)र्ध्व-पुण्ड्र- -ण्ड्रः कागृउ ४६ : १६.

घृति[n]- -तयः अअ २,१०; -तिः आश्रौ ८, १३, १†; †आपश्रौ २०, ५, १९; २१, १२, ७; बौश्रौ; कप्र १, १, १२; विध १, १९××; ऋअ २, १, १३३; -तिम् माश्रौ ६, १, ७, १८; वाधूश्रौ; -तिषु काश्रौ २०, २, ८; आपश्रौ २०, ६, १४; हिश्रौ १४, २,१७; -†ती आपश्रौ ४, ६, ५; माश्रौ ४, ९, ३; हिश्रौ ६, २, १६; -तीः काश्रौ २०, ३, ४; आपश्रौ २०, ५, १९; बौश्रौ.

घृति-द्वय- -यम् ऋअ ४, ८.

घृति-मत्- -मान् कौगृ ३, १२, २९.

?घृति-स्वर- -रात् निसू ९, ६ : २८.

घृति-होम- -मे कप्र ३,६,५.

घृत्य(ति-अ)ष्टि-शक्करी-जगती- -त्यः पिं ४ ५.

घृत्वन्- पाउ ४,११४.

घृत्वा काश्रौ १६, २, २९; आग्निगृ.

घ्रियत्- -यति कप्र २,७,२.

घ्रियमाण,णा- -णम् आश्रौ २, २, १; -णान् माश्रौ २, ५, २, ९; -णायाम् पागृ २,१४,११; -णे आश्रौ ३,१२,२१; काश्रौ; -णेषु बौश्रौ २७, ६ : २२.

√घृज्, ञ्ज् पाधा.भ्वा. पर. गतौ.

घृरु[o]- -रुः अप ४८, ११५†:

√घृष् पाधा. स्वा.पर. प्रागल्भ्ये; चुरा. उभ. प्रसहने, †घर्ष > र्षा[p] आपश्रौ ७, १३, ८; बौश्रौ; ४,५:१८; माश्रौ ७, १०, ८; वाश्रौ १, ६,४, १५; वैश्रौ १०, १० : ११; हिश्रौ ४; ३, १९; शुप्रा ३, १२९; तैप्रा ३,८.

घृष्णोति निसू २,२ : ५.

दघृष्- पा, पावा ३, २,५९.

†दाघृषि[m]- -षिः शांश्रौ १२, २०, २; ऋप्रा ९,३८; -षिम् आश्रौ ३,८,१.

---

*a*) धैर्यं° इति पाठः? यनि. शोधः ⌊तु. जीसं.⌋। *b*) पामे. वैप १,११५६ i द्र.। *c*) =⌊प्रणवस्य⌋ प्रचयाख्यस्वर-। *d*) =वायु-विशेष-। अपु २१९,३० ऋतम् इति। *e*) व्यप.। बस.। *f*) विप.। बस.> कस.>षस.। *g*) विप.। बस.। *h*) =नगरी-विशेष-। °र्तराष्ट्री- इति ⌊पक्षे⌋ पागम.। *i*) =सर्प-विशेष-। *j*) विप. (सत्र-)। तस्येदमीयः अण् प्र.। *k*) =वृत्ति-विशेष-। *l*) =ऋच्-। *m*) वैप १ द्र.। *n*) भाप., नाप. (छन्दो-विशेष- ⌊ऋअ. अअ. प्रभृ.⌋, होम-विशेष- ⌊काश्रौ. आपश्रौ. प्रभृ.⌋, षोडशमातृकाऽन्यतमा- ⌊कप्र.⌋)। *o*) अर्थः व्यु. च?। *p*) पामे. वैप १,१७३८ k द्र.।

घर्षित- पा १,२,१९.
घर्षितवत्- पा १, २,१९; -वान् सु २७,१.
†घृषत[a]- -षत् आश्रौ ६, ४,१०; ८, १२,६; वैताश्रौ १६, १४; -षता आश्रौ ६,४, १०; शांश्रौ १४,४९,३; माश्रौ ५,१,२,१७.
धृषद्-वर्ण[a]- -र्णम् बौश्रौ ३,९: ९; बौगृ १,४,११.
†धृषाण[a]- -णम् शांश्रौ १८,३,२[b].
†धृषित- -तम् शांश्रौ १८, ३,२[c].
धृषु- पाउ १,२३.
धृष्ट- पा ७,२,१९; -ष्टम् द्राश्रौ ५, २,७; लाश्रौ २,६, ३; निसू १, ११ : १५.
धृष्टि,ष्टी[a]- -†ष्टिः शांश्रौ ८,२४,३; काश्रौ २, ४, २५; आपश्रौ १, १२, १××; बौश्रौ; -ष्टिभ्याम् काश्रौ २६,३,९; -ष्टिम् आपश्रौ १, ६,१†; बौश्रौ; -ष्टी काश्रौ २६, २, १६; ७, २८; आपश्रौ; -ष्टीभ्याम् बौश्रौ ९,६-७ : १३; १४ :१५;-ष्टेः बौश्रौ २०, ८ : १;१२;२६,५ : ९;-ष्ट्या वैश्रौ २,३ : ६.
धृष्टि-धवित्र- -त्राणि वाधूश्रौ ३,१०० : ६.
धृष्णज्- पावा ३,२,१७२.
†धृष्णु[a]- पा ३,२,१४०$;-ष्णवः या १२, ७; -ष्णवे तैप्रा ४, ५४; -ष्णु वागृ ५, ९; -ष्णुः आग्निगृ ३, ५, ७ : २५; बौपि १,७ : २; -ष्णुम् अपं २ : २१; -ष्णू बौश्रौ १५, २४ : ५; -०ष्णो या ८,३.
†धृष्णुया[a] आपश्रौ १७, ८, ७; वैश्रौ १९,५ : ५२; शुप्रा ५,२०.

√धॄ पाधा. क्र्या. पर. वयोहानौ.

√धे[d] पाधा. भ्वा. पर. पाने, धयते वाधूश्रौ ४, ११८ : ६; अप ७०[2],३,१;१२,१;†धयति आश्रौ ६, ७,२; आपश्रौ; आग्निगृ २,१, ४ : १७[e]; धयन्ति बौश्रौ २९, १० : ११; या ९,२७[3]; †धयतु आपमं २, १३, ४[e]; भागृ १, २५ : १०; हिगृ २, ४, ३; †धय आपश्रौ १६, १२, ११; १७, २३, १०; बौश्रौ; अधयत् कौसू ११३,२†; धयीत आपश्रौ १५, २०, १५; माश्रौ ११, २१, १६; धयेत् लाश्रौ ८, ३, १०; आग्निगृ; धयीरन् वैश्रौ २०, २ : १६; धयेयुः आपश्रौ ९,१,२३; बौश्रौ.
धय- पा ३,१,१३७.
धयत्- -†यतः[f] आग्निगृ १, ५, ३ : १; हिगृ १, १९, ७; जैगृ १,२० : २६; -यति कौसू ९३, २०; -†यन् आश्रौ ८,१३,२; आपश्रौ; -यन्तम् बौश्रौ ९, ९ : ९; आपमं १, ४, १०†[f]; कागृ २८, ४†[f]; बौगृ २, १, ११[2]†[f]; भागृ १, १४ : ९†[f]; वैध ३,२,१५.
धयन्ती- -न्तीम् पागृ २, ७,१४; बौध २, ३, ३८; गौध ९,२४; -न्त्याम् कौसू ९३,२.
धयद्-व(त > )ती[g]- -तीषु आपश्रौ १४, १८, ५†; बौश्रौ १४,२५ : १८; हिश्रौ १५,५,८.
†धापवे बौश्रौ ९, ९ : ११; बौगृ २,१,१०; शुप्रा ४,६४†.
धातुम् वाधूश्रौ ४,११८ : ५.
३धा(त्र >)त्री[h]- -त्री अप ७, १, १०.
२धान[i]- -ने आश्रौ ३,१०,३०.
धारु[a]- पा ३,२,१५९.
२धी(त > )ता- -तानाम् वैश्रौ २०,३ : २; अप्राय ४,१; -ताम् बौश्रौ २७,१३ : २; वैश्रौ २०, ३ : १; -तासु काश्रौसं ३२ : ७; ८.
धीता(ता-अ)न्या- -न्याम् वैश्रौ २०,२ : १६.

√धेक् पाधा. चुरा. उभ. दर्शने.

?धेनवत्सते वाश्रौ ३,४,२,११.
† धेना[a]- पाउ ३, ११$; -ना आपश्रौ ११, ३, १४; बौश्रौ; या ६, १७ф; -नाः आपश्रौ १७,१८,१; बौश्रौ १०, ३३ : २५; हिश्रौ ११,७,५५; -नाये वागृ १३,१; -ने या ६, १७.
धेनु[a',j]- पाउ ३,३४; पाग ४,१,८६; १०४[k]; -†नवः आश्रौ ४,७,४; ५,१,११; शांश्रौ; या १४,१५; -नवे काश्रौ २६, ६, २४; -नु[l] जैश्रौ २३ : १०; जैश्रौका ५६; द्राश्रौ २, २, २९; लाश्रौ १, ६, २७; वैगृ २, २ : ५†[m].

---

*a)* वैप १ द्र. । *b)* पाभे. वैप १,१७४० g द्र. । *c)* पाभे. वैप १, १७४० i द्र. । *d)* या ११, ४२ पा २,४, ७८; ३, १, ४९ पावा १,३,९६ परामृष्टः द्र. । *e)* सपा. धयति<>धयतु इति पाभे. । *f)* पाभे. वैप २, ३खं. धयतः मंब्रा १, १, १२ टि. द्र. । *g)* =ऋच्- । *h)* =उप-मातृ- । *i)* =पान- । *j)* पुं. स्त्री. न. च बप्रा. । *k)* व्यप. । *l)* =ग्राम-विशेष- । *m)* धेनुम् ( ऋ १, ९१, २० ) इत्यस्यान्त्याक्षरलोपः (तु. पाम ६, १, ९) ।

–नुः †आश्रौ १,७,७[2a]; ४,१५, २××; शांश्रौ; बौश्रौ ३,२९ : ११[2]†[a]; जैश्रौ २ : २०†[b]; जैश्रौका १५†; आग्निगृ २,६,६ : २९†[b]; हिगृ १,१३;१२†[b]; जैगृ १,१९ : ४३†[b]; †गो[b] १, ३३; २, १२; कौसू ११४, १; हिध १,८,३०†[b]; निघ १,११[c]; †या १०,१६; ११,२९; ४२φ; –नुम् आश्रौ २,१९, २२†××; †शांश्रौ ३,१६,४; ६, १०, ३; ८,१८,१[d]; २०, १[2e]; १०, ७, ७; काश्रौ २६,५,२?[f]; आपश्रौ; †या ६, २९; ११, ४३; –नुमऽ -नुम् गो २, ११†; –नुषु बौश्रौ २०, १ : ४१; –नू बौश्रौ १५, २८:१७;१८[2]; द्राश्रौ २,२,२९; लाश्रौ १, ६, २७; –नूः काश्रौ १५,७,३३; आपश्रौ; लाश्रौ ३, ६,१?[g]; –नूनाम् काश्रौसं २९ : २१; बौश्रौ; –नोः शांश्रौ १५,३, ७†; आपध १, १७, २४; हिध १,५,५६; –नौ कौसू ९३,२१; –न्वा काश्रौसं २७ : १३; भाश्रौ १०,१७,७; हिश्रौ ७,२,६७†; –न्वाः काश्रौसं ३६ : ६; –न्वै बौश्रौ २,७ : ९.

धैनव– पा ४,१,८६; १०४.

धैनुक– पा ४,२,४७.

धेनु-करण– -णेन बौश्रौ २५, ३० : १४.

धेनु-(क>)का[h]– -†का[i] आपमं १, १३,३; कौगृ १,१२,६; शांगृ १, १९, १३; हिगृ १, २५, १?[j]; –के आश्रौ १२,६, ३०; शांश्रौ.

धेनु-त्व– -त्वम् अप ९,२,६.

धेनु-दक्षि(णा>)ण[k]– -णः काश्रौ २२,१, ३; –णम् आपश्रौ ५, २२,८.

धेनु-भ(व्य>)व्या[l]– -व्या[b] बौश्रौ १७,४४ : १३; आपमं.

†धेनु-म(त>)ती– -ती आश्रौ ३, ८,१; आपश्रौ.

धेनुं-भ(व्य>)व्या[h]– पावा ६, ३, ७०.

धेनु-रोम-सं(स्या>)स्य[m]– -स्यानि विध ९२,८.

धेनु-वत् मीसू १०,३,५९; ६५.

धेनु-वर– -रम् बौश्रौ ४,११ : २९; ७,४ : २२.

धेनुवर-प्रदान– -नात् आग्निगृ १, ७,३:३९;२,२,१:१०××; बौगृ.

धेनु-शत– -तम् काश्रौ २२,१०,१; बौश्रौ; –तस्य काश्रौसं २९ : २०.

धेनु-ष्ट(<स्तर>)री[h]– -रीम् माश्रौ ५,२,१०,२२.

धेनुष्या– पा ४,४,८९; पाग ५, २,३६.

धेनुष्यित– पा ५,२,३६.

धेनु-सहस्र– -स्रेषु विध २०,४७.

धेन्व(नु-अ)नडुत्-सीर-धान्य-पल्य-दासमिथुन-महानसा (स-आ) रोहण-विमित-शयन– -नानि काश्रौ २२,२,२७.

धेन्व (नु-अ) नडुत्-स्त्री-प्रजनन-संयुक्त[n]– -क्ते गौध १३,२९.

धेन्व(नु-अ)नडुह्[o]– -डुहोः आपश्रौ ५,२२,५; आपध.

धेन्व(नु-अ)नडुह[o]– पा ५, ४, ७७; –हयोः काश्रौ ७,२,२०; –हौ वाध १४,४५;४६; गौध १७,२८.

धेन्वा(नु-आ)दि– -दीनि कौसू ६२, १९; ६४, २६.

धेनुजि– (>धैनुज्य– पा.) पाग ४, १,१५१.

√धेप्[p] पाधा. भ्वा. आत्म. गतौ.

धेय– √धा द्र.

धैर्य– प्रभृ. √धी>धीर– द्र.

धैवत[q]– -तः माशि १, ८; १२; १४; २, २; याशि १, ९; नाशि; –तम् नाशि १,४,२; ५,४××; –तस्य नाशि १, ४, ७; –ते माशि १,१०; नाशि १,२,१२.

धैवत-त्व– -त्वम् नाशि १,५, १८.

धैवत-सहित– -तः नाशि १,४,५.

धैवत्य– √धी>धीवन्– द्र.

धैवर[r]– (>°रायणि– पा.) पाग ४, १,१५४.

धोक्ष्यमाणा– √*दुघ् द्र.

√धोर् पाधा. भ्वा. पर. गतिचातुर्ये.

---

*a*) पाभे. वैप १, १७४२ p द्र.। *b*) सपा. धेनुः हव्या <> धेनुः भव्या <> धेनुभव्या इति पाभे.। *c*) =वाच्-। *d*) पाभे. वैप १,१७४२ o द्र.। *e*) पाभे. वैप १, १७४२ m द्र.। *f*) =साम-विशेष-। पाठः (तु. अग्निस्वामी [लाश्रौ १,६,२७]) ? °नु इति शोधः (तु. जैश्रौ. लाश्रौ.)। *g*) धेनुः इति पाठः? यनि. शोधः (तु. भाष्यम् सप्र. द्राश्रौ ९,२,१ च)। *h*) वैप १ द्र.। *i*) पाभे. वैप १, १७४३ j द्र.। *j*) °नुगा इति पाठः? यनि. शोधः (तु. शौ ३,२३,४ कौगृ)। *k*) विप.। बस.। *l*) =धेनुं-भव्या-। *m*) विप.। षस.>बस.। *n*) विप.। द्वस.>तृस. (तु. Büh.; वैतु. भाष्यम् स्त्रीप्रजनन- =कन्याविवाह- इति?)। *o*) द्वस. वैकल्पिकः समासान्तः *p*) तु. BPG। *q*) =संगीतस्वरविशेष-। व्यु. ? <√धा इति नाशि १, ५, १८; < धी-वत्- इति अभा.। प्र. (पा ५,४,७७)। *r*) तु. पागम.।

**धौकरीय-** धूकर- द्र.
**धौत-** प्रभृ. √धाव् (शुद्धौ) द्र.
**धौमक-** २धूम- द्र.
**धौमतायन**[a,b]- (> °यनक- पा.) पाग ४,२,८०.
**धौमायन-** ३धूम- द्र.
**धौमीय-** १धूम- द्र.
**धौम्य-** ३धूम- द्र.
**धौम्रायण-** २धूम्र- द्र.
**धौरेय-** धुर्- द्र.
**धौर्त-**, धौर्तक- √धूर्व् द्र.
**धौर्तेय-** घार्तेय- टि. द्र.
**धौर्त्य-** √धूर्व् द्र.
**धौवकि-** ध्रुवक,का- द्र.
**√ध्मा**, ध्मात- √धम् द्र.
**?ध्मार्यमाणम्**[c] काश्रौसं ३६ : १५.
**ध्यामन्-** पाउ ४,१५१.
**√ध्यै**[d] पाधा. भ्वा. पर. चिन्तायाम्, ध्यायति आपश्रौ १, १६, ४; ९××; बौश्रौ; ध्यायतः वैश्रौ १५, २९ : ५; ध्यायन्ते शांश्रौ १०, २१, १४; ध्यायन्ति आपश्रौ ७, २८, ८†; वाधूश्रौ; ध्यायन्तु जैगृ १, १५ : २†; ध्यायस्व अप १३, ३, ३; ध्याय काश्रौ ४, ५, १७†; अध्यायत् वाधूश्रौ ४,३० : १७; ध्यायेत् आश्रौ ५, १८, ३; काश्रौ; या ८,२२†.
ध्यायीत वैश्रौ १७, ६ : ३; ध्यायात् आश्रौ २,३,१९; शांश्रौ, अध्यायि या ६,२२.
ध्यात-, ध्यातवत्- पा ८, २,५७.
ध्यात्व- पाउत्र ४,१०५.
ध्यात्वा आपश्रौ २१, १२, १०; माश्रौ.
ध्यान- पाग २, १, ४०°; -नम् वैश्रौ २०, १ : ६; अप; या ५, १;१२,३३[१]; -नानि माश्रौ ५, २,११,२३; -नेन वैध १, ११, १३.
ध्यान-गुह्य- -ह्यम् विध ९७, ११.
ध्यान-निरत- -तस्य विध ९७, ६.
ध्यान-युक्त- -क्तः कागृउ ४२ : २.
ध्यान-योग- -गेन विध १, ३२; वैध २,८,७.
ध्यानयोग-रत- -तस्य आग्निगृ ३,१०,४ : ३५.
ध्यानयोगिन्- -गी वैध ३, ५,१२;७,१३.
ध्यान-वत्- -वन्तः या ४,१०.
ध्यान-शील- -लः शंध २००.
ध्याना(न-अ)ग्नि- -ग्निः वाध ३०,८.
ध्यायत्- -यन् आश्रौ ५, १४,२४; शांश्रौ.
ध्यायिन्[f]- -यिनः अप ४०,५,३; -यिनाम् वाध २६,१२.
ध्येय- -यम् वैध १,१०,९.
**√ध्र** (गतौ), ध्रति निघ २,१४†.
**√ध्रज्**, **ध्राज्**[g] पाधा. भ्वा. पर. गतौ, ध्रजति निघ २,१४†.
ध्रजि[g]- पाग ८, २, ९; -जिम् हिश्रौ ११, ७, ५९; -†ज्यै[h] आपश्रौ ७, २५, ५; बौश्रौ ४, ९ : १८.
ध्रजि-मत्- पा ८,२,९.
ध्राजि[g]- पाउभो २, १, १६६; -†जिः वैश्रौ ४,६ : ८; हिश्रौ १, ५, ४१; या १२, २७ϕ; -†जिम् आपश्रौ १६, २७,९; बौश्रौ १०,३४ : ५; वैश्रौ १८, १९ : १२; कौसू ३६,२५.
**√ध्रञ्ज्** पाधा. भ्वा. पर. गतौ.
**√ध्रण्**, **ध्रन्**[i] पाधा. भ्वा. पर. शब्दे.
**√ध्रस्** पाधा. क्र्या. चुरा. पर. उञ्छे.
**√ध्रा**, ध्राति निघ २,१४†.
**ध्राक्षा**[a]- (> °क्षा-मत्- पा.) पाग ८, २,९.
**√ध्राघ्** पाधा. भ्वा. आत्म. सामर्थ्ये.
**√ध्राङ्क्ष्** पाधा. भ्वा. पर. काङ्क्षायाम् घोरवासिते च.
**√ध्राड्** पाधा. भ्वा. आत्म. विशरणे.
**ध्राडि-** पाउ ४,११८.
**?ध्रापाग्**[j] चाश्र ३ : ७†.
**√ध्रि**, ध्रयति निघ २,१४†.
**ध्रियत्-**, ध्रियमाण- √धृ द्र.
**√ध्रु** पाधा. भ्वा. पर. स्थैर्ये; तुदा[k]. पर. गतिस्थैर्ययोः, ध्रुवति निघ २,१४†.
ध्रुव,वा[g]- पाउत्र २, ६१; पाग ४, ३, ११८; ५, ४,३°; -०व आपश्रौ १४, २७, ६[२]†; वैश्रौ; मागृ २, १६४†; विध १, ५७; -वः आश्रौ, ६, ९, ३†; ७, ३, ७; काश्रौ

*a*) अर्थः व्यु. च?। *b*) <धौमति-(<धूमत-) इति पागम., <धौमत- इति MW., =?धौमायन- इति PW.। *c*) पाठः? धार्यमाणम् इति शोधः [तु. सप्र. आपश्रौ १५,१०,१२]। *d*) पावा ३,२,१७८ परामृष्टः द्र.। *e*) तु. पागम.। *f*) णिनिः प्र. उसं. (पा ३,१,१३४)। *g*) वैप १ द्र.। *h*) सपा. मा ६, १८ का ६, ४,२ मै १,२,१७ काठ ३,७ क २, १४ ध्राज्यै इति पाभे.। *i*) तु. BPG.। *j*) पाठः? प्राक्, अपाक् इति शोधः (तु. सप्र. मै १,३, ४)। *k*) =√ध्रुव् इति [पक्षे] भाण्डा. प्रभृ.।

३, २, १९××; ८, ४, १९†[a]; आपश्रौ; माश्रौ २,२,२, ३३†[a]; ३,८,४†[b]; बौपि १,१५:६६†; अप्राय ६, ३५[c]; विध ८, ३८; ऋअ २, १०, १७३[d]; शुअ २, ८७[d]; –वम् काश्रौ २,४,२६†; ९, ६, २१; १०, ७, ६[e];†; †आपश्रौ १, २२, २; ११, ८, १[a]; ५[a]; १२, १६, ८[e]†; वैश्रौ १४, ६ : ६[a]; हिश्रौ ७, ५, १७†[a]; लाश्रौ ३, ३, ६[f]; सु १८, ६; आगृ १, ७, २२[f]; पागृ १, ८, १९[g]; †मागृ १, १४, ९[f]; १०[f]; कप्र १, ६,३; १०, १२; शंध ११६ : ४३[h]; ५२[h]; ६३[i]; या ११, ७[i]; ऋप्रा ६, ३९[j]; पा १, ४, २४; ६, २, १७७; –वया आपश्रौ ३, १३, २; बौश्रौ; –वस्व आपश्रौ १३, १५, १५; २२, २७, ६; काठश्रौ; कौगृ १, १०, ११[k]; –वा †आश्रौ २, ३, २५; ४,१२, २[l]; †शांश्रौ ४, ८,३[m]; ११, १; †काश्रौ २, ८, १९[m]; ३, ३, १२××; आपश्रौ; भाश्रौ ३, ६, १३?[n]; माश्रौ १,२,६, ३०†[m]; आपमं १,८,९†[o]; कौगृ १,१०,१३†[o]; शांगृ १, १७,३†[o]; पागृ १, ८, १९†[o]; बौध ३,१,५[p]; २,७७[p]; –वाः आश्रौ ७, १, ७; †आपश्रौ १,२, ९; १४, २७, ७[q]; बौश्रौ; –वाणाम् आश्रौ १,१२,३; बौश्रौ ७,७ : २०†; गोगृ २,१,१२;–वाणि आश्रौ४, १५,७; हिगृ; –वात् काश्रौ ९, ५,१५; आपश्रौ;–†वान् आपश्रौ ३, १३, ६; भाश्रौ; –वाभ्याम् कौसू ४३,११; १३६,७; –वाम् शांश्रौ ४, ११, १; १४, २०; काश्रौ;–†वाय आपश्रौ१३,१४, ११; १४,१,७; बौश्रौ; –वायाः काश्रौ १, ८, ३९; ३,३,९××; आपश्रौ; –वायाम् आश्रौ २, ६,१०; काश्रौ; भाश्रौ १२, ३, ७?[r]; अप ३६, १, १०[s]; बौध ३, २, ४[p]; –वायै बौश्रौ २०, २४ : ३८; २४, ३३ : २१; अअ १२, ३†; –वासः मागृ १,१४,१०†[q]; –वासु बृदे ६, १५†; –वे †बौश्रौ १९, ७ : २३; ४३××; माश्रौ; –†०वे कौसू ८१, ७; अशां २, ५; अअ १८, ४; –वेण काश्रौ १०, ७,६†; आपश्रौ; अप ५२, १०,४[g]; –वेभिः या १४,२७†; –वेषु जैगृ २,५ : २०; –?वोः माश्रौ ४,६,४.

ध्रौव[t]– –वः शुअ १,४६७; –वम् शांश्रौ ५, ८, २; काश्रौ; –वस्य माश्रौ १, ३,२,७××; वाश्रौ १, १, १, ३३; वैताश्रौ १३, ४; –वात् आपश्रौ १०, २१,१२××; मीसू १०,८,४७.

ध्रौवा(व-आ)ज्य– –ज्यम् वैश्रौ १२, २२ : १३; –ज्येन बौश्रौ २०,१५ : १.

ध्रौवक– पा ४,३,११८.

१ध्रौव्य[u]– –व्ये शांश्रौ २, १६,१.

ध्रौव्य-काम– –मः कौसू ५९,१३.

ध्रौव्य-गति-प्रत्यवसाना-(न–अ)र्थ– –र्थेभ्यः पा ३, ४, ७६.

२ध्रौव्य[v]– –व्ये अअ ६,८८.

१ध्रुव-क– पा ५,४,३.

†ध्रुव-करण[w]– –णाय वैध २, ६,३.

ध्रुव-कर्मन्– –र्मसु अशां १, ३; –र्माणि आज्यो ५,२.

ध्रुव-कुमार– –राय जैगृ १, ५ : ६.

ध्रुव-क्षित्[x]– –क्षित्[y] आपश्रौ ७, ५,६; बौश्रौ.

†ध्रुव-क्षिति[x]– –तये बौगृ २, ८,९; भागृ ३,१२ : १६; –तिः काश्रौ १७, ८, १५; आपश्रौ; माश्रौ १, ७, ३, ३४[y]; –तिम् आपश्रौ १२,१६,८.

---

*a*) पाभे. वैप १, १७४५ f द्र. । *b*) पाभे. वैप १, १७४५ g द्र. । *c*) द्विः सपा. मै ४, ६, ६[3] ध्रुव [सं१] इति पाभे. । *d*) = ऋषि-विशेष- । *e*) पाभे. वैप १, १७४५ l द्र. । *f*) = नक्षत्र-विशेष- । *g*) व्यप. । *h*) = मरुद्-विशेष- । *i*) = वसु-विशेष- । *j*) = पारिभाषिक-संज्ञा- । *k*) सप्र. ध्रुवस्य दर्शनात् <> ध्रुवदर्शनात् इति पाभे. । *l*) पाभे. वैप १,१७४५ p द्र. । *m*) पाभे. वैप १, १०४३ f द्र. । *n*) ध्र° इति पाठः? यनि. शोधः । *o*) पाभे. वैप १, ७९७ *a* द्र. । *p*) = वृत्ति-विशेष- । *q*) पाभे. वैप १, १७४६ f द्र. । *r*) °व्याः इति पाठः? यनि. शोधः (तु. भाश्रौ २, ७,३) । *s*) = अधोदिश्- । *t*) साऽस्यदेवतीयस् तत्रभवीयश्च अण् प्र. । *u*) भाप. । *v*) विप. (सूक्त-) । तेन दृष्टमित्यर्थे ढ्यण् प्र. उसं. (पा ४, २, ९) । *w*) उप. कर्तरि कृत् । *x*) वैप १ द्र. । *y*) पाभे. वैप १,१७४६ i द्र. ।

ध्रुव-गोप[a]- -पः आपश्रौ १८, ७,९; बौश्रौ; बौगृ ३, १०, ६[b]; -पम् काश्रौ ९,८,१[c].
ध्रुव-ग्रहण- -णात् माश्रौ २,३, ४,२१.
ध्रुव-चेष्टित-युक्ति- -क्तिषु पावा १,४,५१.
†ध्रुव-तम- -मः बौश्रौ ७, ७ : २०.
†ध्रुव-तस् (:) आपमं १,९, ६; बौगृ.
†ध्रुव-ता- -ताम् आपमं १, ९,७; आग्निगृ.
ध्रुव-दर्शन- -नात् शांगृ १, १७,२[d]; कप्र २,१०,१५.
ध्रुवदर्शना(न-अ)न्त[e]- -न्तम् वैगृ ३,४ : १४.
†ध्रुव-प(ति>)त्नी[e]- -त्नी मागृ १,१४,१०; वागृ १५,२१.
†ध्रुव-योनि[f]- -निः बौश्रौ १०, ३८ : ६; माश्रौ.
ध्रुव-वत्- -वद्भिः बौश्रौ ११, १३ : १०; १७,२ : ५; -वद्भ्यः बौश्रौ ११,१३ : ९;१७,२ :५.
ध्रुव-शिष्ट[g]- -ष्टे ऋप्रा ६, ४५.
ध्रुव-शील[e]- -लः गौध ३,१३.
ध्रुव-शेष- -षात् वैश्रौ १२,८ : १[h].
†ध्रुव-सद्[i]- -सदम् काश्रौ १४,२,१; शुअ १,५५४.
ध्रुव-साध(क>)की[i]- -०कि अशां ४,४.
ध्रुव-सूक्त- -क्तेन वैश्रौ २१,१४ : १६.
ध्रुव-स्थ- -स्थान् अअ ३,२६.
ध्रुव-स्थान- -नात् वैश्रौ १६, १९ : ८.
ध्रुवस्थानो(न-उ)पसादिन्- -दिनाम् अशां ६,६.
ध्रुव-स्थाली- -ली बौश्रौ २५, १३ : १४; -लीम् काश्रौ ९,२, १८; आपश्रौ; -ल्याः वैश्रौ १५, १८ : १; हिश्रौ ९,५,१२.
ध्रुवा-करण- -णम् वाश्रौ १,१, २,२४.
ध्रुवा(वा-आ)ज्य[j]- -ज्यम् बौश्रौ ६, १२ : ४; १८ : ३३××; -ज्यात् बौश्रौ १,१५ : ७××.
ध्रुवा-तस् (:) बौश्रौ २७,२: १७.
ध्रुवा(वा-आ)दि[e,k]- -दीनि वाश्रौ १,३,४, २७; ७,५,१६.
ध्रुवा (व-अ)न्त[e]- -न्ताः बौश्रौ २२,२१ : २; २३,१३ : २.
ध्रुवा-प्रभृति- -तिभिः माश्रौ ६, १,२,८.
ध्रुवा(वा-अ)र्थ- -र्थे काश्रौ ८, २,२८.
ध्रुवा(व-अ) वनयन- -नम् आश्रौ ५,२०,७.
ध्रुवा-वर्जम् आपश्रौ ७, २७, ८; हिपि ५ : १२.
ध्रुवा-शेष- -षात् हिश्रौ ७, १, ४१[h]; २,१५; ३,६९.
ध्रुवा(व-अ)श्व[l]-कल्प- -ल्पम् मागृ २, ६,१.
ध्रुवा-समञ्जन- -नात् भाश्रौ ७, ११,२;३.
ध्रुवासमञ्जन-प्रभृति- -तीनि हिश्रौ ४,३,२६.
ध्रुवासमञ्जना(न-आ)दि- -दि आपश्रौ ७,१४,३.
ध्रुवा(वा-आ)सादन- -नात् बौश्रौ ३,२४ : १२.
ध्रुवी√कृ,ध्रुवीकरोति या२,१८.
ध्रुवै(व-ऐ)न्द्राग्न-वैश्वदेव- -वानाम् आपश्रौ २२,२७, १७; हिश्रौ २३,४,३९.
√ध्रुव् √ध्रु टि. द्र.
ध्रुव-, १ध्रुवक- √ध्रु द्र.
२ध्रुवक, का[m]- पाउभो २, २, १०; पाग ४, २, ८०; ५,२, १००[n]; पावाग ७,३,४५[o].
ध्रुवकिन्- पा ४,२,८०.
ध्रुवकिल- पा ५,२,१००.
ध्रुव-करण- प्रभृ. √ध्रु द्र.
३ध्रुव(क>)का[p]- ( > ध्रौवकि- पा.) पाग ४, १,९६.
ध्रुव-क्षित्- प्रभृ. √ध्रु द्र.
?ध्रुवद्रप्सम् अप ४८,११५.
ध्रुवन[q]- -नानि कौसू ८६,१६.
ध्रुवपत्नी- प्रभृ. √ध्रु द्र.
√ध्रेक् पाधा. भ्वा. आत्म. शब्दोत्साहयोः
√ध्रै पाधा. भ्वा. पर. तृप्तौ.
ध्रौव-, ध्रौवक- √ध्रु द्र.
ध्रौवकि- ३ध्रुवका- द्र.

a) = ध्रुवग्रह-रक्षक-। b) = सर्प-विशेष-। c) उप. पाभ. वेति कर्कविद्याधरौ। d) पाभे. पृ १३६३ k द्र.। e) विप.। बस.। f) वैप १ द्र.। g) पूप. = पारिभाषिक-संज्ञा। h) सपा. °वशे° <> °वासे° इति पाभे.। i) विप. (उत्तराषाढा-)। उप. क्वुन् प्र. उसं. ( पावा ३, १, १४५ )। j) कस. ( तु. सा. [तै. पृ ३२२] ध्रौवम् आज्यम् इति)। k) पूप. [तात्स्थ्यात्] हविस्-। l) = कर्म-विशेष-विधि-। बस.>षस.। m) अर्थः व्यु. च ?। n) °का- इति पाका.। o) तु. पाका.। p) व्यप.। व्यु. ?। q) अर्थः व्यु. च ?। = स्थापा इति पंजा. (तु. केशवः [कौसू ८४, १०] )।

**१-२ध्रौव्य-** प्रमृ. √ध्रु द्र.

**√ध्वंस्**[a], **ध्वस्** पाधा. भ्वा. आत्म. गत्यवस्रंसनयोः, ध्वंसते अप ४८, ५; आपध; ध्वंसति निघ २, १४†; ध्वंसन्ति आपध २,२४, ९; हिध २,५,१७४.

ध्वंसयति वैश्रौ ४,७ : ८; ध्वंसयेयुः माश्रौ ५,१,८,११.

ध्वंस- > ध्वंस-कला[b]- (> °ला-√कृ पा.) पाग १,४,६१.

ध्वंसन- -ने अप ४८,३७; या २,९.

ध्वंसयत्- -यन् आपश्रौ ९,६,११; बौश्रौ.

ध्वसनि[c]- -नौ या २,९†ϕ.

ध्वस्मन्[c]- > †°स्मन्-वत्[c]- -वत् अप ४८,७५; निघ १,१२.

**ध्वंसस्**[d]- -ससः आपमं १,१७,४†[e].

**ध्वंसि**[f]- -सयः शांश्रौ १४,८२,२.

ध्वंसि-स्तोम- -माः शांश्रौ १४, ८२,१.

**√ध्वज्** पाधा. भ्वा. पर. गतौ.

**ध्वज**[g]- पाग २, ४, ३१; ४, १, ४५; ५, ३, १००; -जः अप १, ३९, ३; अशां ९,३; -जम् आपश्रौ २०,१६, ३; बौश्रौ; -जाः अप ७१, १९, ५; -जे अप ७०[3], २७, १०; ३२, १५;७२,२,६; काध २७६ : ६.

ध्वजी- पा ४,१,४५.

ध्वज-तोरण- -णैः अप ५५,५,२.

ध्वज-भूषित- -तेषु विध ९९,१०.

ध्वज-विश्राविन्[h]- -वी वैध ३,१२, १०.

ध्वज-वे(दि>)दी- -दीभिः अप ५५,५,२.

ध्वज-स्तम्भे(म्भ-इ)न्द्रकील- -लानाम् अप ६४,४,१.

ध्वजा(ज-आ)कार[i]- -रम् आग्निगृ २,५,१ : २०.

ध्वजा(ज-आ)कृति[i]- -ति वैगृ ४, १३ : ९.

ध्वजा(ज-अ)पहारिन्- -री शंध ३७८

ध्वजा(ज-अ)भिलपन- -नम् अप ७२,३,७.

**ध्वजवत्**[j]- (> १ध्वाजवतायनि- पा.) पाग ४, १,१५४[k].

**ध्वजवद्**[j]- ( > ध्वाजवदायनि- पा. ) पाग ४,१,१५४.

**ध्वजि**[l]- ( > °जि-मत्- पा. ) पाग ८,२,९.

**√ध्वञ्ज्** पाधा. भ्वा. पर. गतौ.

**√ध्वण्** पाधा. भ्वा. पर. शब्दे.

**√ध्वन्**[m](बधा.) पाधा. भ्वा. चुरा. पर. शब्दे, ध्वनति अप ४८,४†;

ध्वनेत् निसू ७,११ : १२.

अध्वानयत् ऋप्रा ९, ५०†[c];

ध्वनयीत् ऋप्रा १४,४३†[c].

ध्वनि[c]- पाउ ४,१४०; -निः आशि ८,१; -नौ आशि ८,२;१३.

ध्वान[n]- -नः तैप्रा २३,७ϕ; -नेन आपश्रौ ३,८,८; बौश्रौ; वाश्रौ १,३,७,३![o]; हिश्रौ २, ५, ६; २१,२,६७.

१†ध्वान्त- -न्तम् आपश्रौ ६,२२, १; या ४,३[p]; बौश्रौ १८[।],१७ : २०[q]; आपमं २, २१, १७[q]; पागृ ३, १४, ६[q]; -†न्ताः[q] वाश्रौ ३,१,२,१; कागृ २६,२; मागृ १, १३, ४; वागृ १५,१; -न्तात् शांश्रौ १४,४९,३.

२†ध्वान्त[r]- पा ७,२,१८; -न्तः बौश्रौ ९,१८ : ४.

**ध्वन**[k]- ( >ध्वानायन- पा. ) पाग ४,१,११०.

**ध्वस्न**[s]- -स्ने निसू ९,९ : ९†.

**ध्वाक्षा**[t]- पा, पाग ४,३,१६५.

**√ध्वाङ्क्ष्** पाधा. भ्वा. पर. काङ्क्षायां घोरवासिते च.

**ध्वाङ्क्ष**[c]- -ङ्क्षः अप्राय २, ६; -ङ्क्षेण पा २,१,४२.

ध्वाङ्क्षा(ङ्क्ष-आ)रोहण- -णे काश्रौ २५,६,६.

ध्वाङ्क्षा(ङ्क्ष-अ)वमृष्ट- -ष्टस्य बौश्रौ १४,९ : १६.

**ध्वाङ्क्षा-** ध्वाक्षा- टि. द्र.

**ध्वाजवत-** (२ध्वाजवतायनि-) ध्वजवत्- टि. द्र.

**ध्वाजि-** पाउभो २,१,१६६.

**√ध्वृ**[u] पाधा. भ्वा. पर. हूर्च्छने, ध्वरति[v] अप ४८, १९; निघ २,१९.

---

*a*) पा ७, ४,८४ परामृष्टः द्र. । *b*) = हिंसा- (तु. पागम.) । *c*) वैप. १ द्र. । *d*) = अङ्ग-विशेष- । *e*) पाभे. वैप १ भंससः ऋ १०,१६३,४ टि. द्र. । *f*) = कालभेद-विशेष-[मुहूर्तशतांशभाग- इति MW.] । व्यु. ? । *g*) = पताका- । व्यु.? । <√ध्वज् इति अभा., ध्व- + √अज् इति MW. ? । *h*) उप. अर्थः ? । *i*) विप. । बस. । *j*) तु. पागम.; ध्वाजवत- इति पाका., पागम. (पक्षे) । वाजवत- इति भाण्डा., वाजवत्- इति पासि. । *k*) व्यप. । व्यु. ? । *l*) = ध्वज- । *m*) पा ३, १, ५१ परामृष्टः द्र । *n*) भाप. = पारिभाषिक-संज्ञा- [तैप्रा.] । *o*) ध्वानः इति पाठः? यनि. शोधः (तु. आपश्रौ.) । *p*) वैप १, १७४७ r द्र. । *q*) पाभे. वैप १, १७४७ t द्र. । *r*) वैप १ निर्दिष्टयोः समावेशः द्र. । *s*) वैप १,१७४८ l द्र. । *t*) ध्वाङ्क्षा- इति पाका. । *u*) या १,८ परामृष्टः द्र. । *v*) हिंसायाम् ।

†ध्वारिपुः आपश्रौ १४,३०,४; वैश्रौ २१,१६ : ६; हिश्रौ १५, ७,१९?[a].
ध्वर्य- पा ३,१,१२३.

# न

नू[b] पिं १,८.
१न[c],>ना शांश्रौ १,१,८;९××;९,५, २°†[d]; काश्रौ; भाश्रौ ३,६,७†[e]; आपमं १,४,७†[f]; १३,९[g]; आगृ १,१३,६†[f]; शांगृ १,२४,४†[h]; ४,१२,११†[i]; पागृ १,५,११†[f]; १७,२†[h]; वैगृ ६४:६†[h]; आग्निगृ १,५,२:५१†[f]; वागृ ३,१†[h]; हिगृ १,१९,७†[f]; आपध १,२०, ६†[j]; हिध १,६, २०†[j]; २,४, ५०†[k]; ५१†[l]; या १,२; ४[2]†; ५[2]; ६[2]†; १०; ११†; १८†; १३, १२; पा १,१,४४; पाग १,१, ३७; ४,५७; पावा १,१,४४[f].
†नकि[m] साअ १,१७६[n]; २०३[n].
नकिम् पाग १,४,५७.
†नकिस्[m](:) आश्रौ६,४,१०°××; शांश्रौ १८,१३, २°; ऋअ २, ४,३०°.
नकीम्[m] निघ ३,१२†; पाग १,४, ५७.
न-गोह्य- -ह्यः बृदे ८,१२७.
न(,नो)चेत् पाग १,४,५७.
न-तद्रूप- -पः बाधूश्रौ ४, ७५ : २३;३५.
ननु[m] आपश्रौ २१,२०, ३; बौश्रौ १६,२७ : २४;××; बाश्रौ; या १,४;५[2]; पा ८,१,४३.
न-नु- -न्वोः पा ३,२,१२१.
न-पुरीष[p]- -षम् आग्निगृ २,६,८ : ३.
न-रिप्येम[q]- >°म-पूर्व[r]- -र्वम् शुप्रा २,२३.
न-वल्मीक[p]- -कम् आग्निगृ २, ६, ८ : ३.
न-शर्करा-मिश्र[p]- -श्रम् आग्निगृ २,६,८ : ४.
न-शाड्वल-मिश्र[p]- -श्रम् आग्निगृ २,६,८ : ४.
न-सत्त- पा ८,२,६१.
न-सिक्त[p]- -क्तम् आग्निगृ २,६,८: ३.
नहि[m] हिश्रौ ६,६,१६†; सु २०,३; ४;२२, १; †या ३,३;४,२७; ऋप्रा.
न-हृ[s]- -हृः पाशि २४.
ना(न—अ)ङ्ग-क्षत्र-धर्म-संसर्ग-त्रि-पू(र्व>)र्वा[t]- -र्वा पावा ४,२, ६०[u].
ना(न—अ)ति-क्रूर-मृदु- -दुना विध १२,४.
ना(न—अ)ति-तीक्ष्ण- -क्ष्णेन माशि ४,४.
†ना(न—अ)ति-नीच- -चैः माशि ४,४.
ना(न—अ)ति-बृहन्मुखी- -खी कप्र २,५, १२.
ना(न-अ)त्युच्च[v]- -च्चैः माशि ४,४.
ना(न-अ)न्तर- > °रीयक- पागम १५५.
ना(न—आ)सन-योग-विहित[w]- -ते हिध १,२,४९[x].
ना(न-अ)स्ति- > नास्तिक- पा ४, ४,६०; पाग ५,१,१२४; १२८; -कः वैगृ ५, १५ : १९; वाध; -काय बौध १,५,८१; -केभ्यः विध ९, ३१.
नास्तिक-ता- विध ३७,३१.
नास्तिक-वृत्ति[r]- -त्तिः वाध १,२३; २१, ३०; शंध ४०३; विध ५४,१५.
नास्तिक्य- पा ५,१,१२४; १२८; -क्यात् वाध २१,२९.
नो[m] निसू २,१:४;३,१२:४४;बौध; या १,६†; पाग १, ४,५७[z y].
नोहि पाग १,४,५७[z].
नो ( न-ऊ )षर[p]- -रम् आग्निगृ २, ६, ८ : ३.
२न[a1]>ना आश्रौ १, २, ६××; ७, ११,८[b1]; १४[2b1]; १७[2b1]; शांश्रौ; या १,४†;७,३१†[b1].

---

*a*) अध्वरिपुः इति पाठः? यनि. शोधः ⌊तु. आपश्रौ.⌋। *b*) =नगण-। *c*) =नञ्। *d*) सकृत् सपा. शौ २,५,१ इह इति पाभे.। *e*) पाभे. पृ ४१२ l द्र.। *f*) पाभे. वैप १ परि. अघम् खि २, ११, १ टि. द्र.। *g*) पृ ४४६ m द्र.। *h*) पाभे. पृ ८१ b द्र.। *i*) पाभे. पृ १२ a द्र.। *j*) पाभे. पृ १२६० c द्र.। *k*) पाभे. पृ १५७ c द्र.। *l*) पाभे. पृ १५७ b द्र.। *m*) वैप १ द्र.। *n*) पाभे. वैप १,१७५८ d द्र.। *o*) पाभे. वैप १, १७५८ e द्र.। *p*) तस.। सस्थ. मृदम् टि. द्र.। *q*) <नु रिप्येम ( मा ३४, ४१)। *r*) विप.। बस.। *s*) बस.>द्वस.। *t*) पृ १३४० द्र.। *u*) तु. पाका.। अनङ्गक्षत्रधर्मत्रि° इति भाण्डा.। *v*) पृ ९६ अत्युच्च->-च्चैः इति नेष्टम्। *w*) पृ १५७ e द्र.। *x*) सप्र. आपध १,६,२६ अनासन° इति पाभे.। *y*) एकतरत्र नौ इति ⌊पक्षे⌋ भाण्डा.। *z*) तु. पागम.। *a[1]*) निषेधेतरेषूपमाद्यर्थेषु नि. द्र. (तु. वैप १)। *b[1]*) संप्रत्यर्थे नि. द्र.।

न्ª- नः ऋत ३,६, २; ४, २, ३; ५, ६,७; शौच; नात् ऋत ४,५, ३; भाशि २२.

न-कार- -रः बृदे २, ९२; ऋप्रा; -रम् ऋप्रा ५, ४०; -रस्य ऋप्रा ४, ८०; १०, २०; १५, १२; उसू; -रे शुप्रा ३, १०७; शैशि; नाशि २, ३,४[b]; -रेण शैशि ७१; याशि २, ८९; ९०; नाशि २,४,५.

नकार-पर- -रे शुप्रा ४,१८७.

नकार-प्रतिषेध- -धः पावा १, १,४७; ८,२,७२.

नकार-मकार- -रयोः शौच १,६७.

नकार-लोपा(प-अ)भाव- -वस्य पावा ३,१,४४.

नकारलोपाभावा (व-अ)र्थ- -र्थम् पावा ३,१,४४.

नकार-लोपो(प-ऊ)ष्म-र-भाव°- -वम् ऋप्रा ११,३६.

नकार-श्रवण- -णम् शैशि २९८; ३००

नकार-हकार-लोपा(प-अ)र्थ- -र्थम् पावा ७,२,२०.

नकारा( र-अ )ङ्ग-स्वर[d]- -रम् शैशि २२४.

नकारा( र-आ )दि°- -दिः ऋप्रा ३,२,३३.

नकारा[e](र-अ)न्त°- -न्तम् शैशि ८२; ३१८; माशि ४,१०; याशि २, ७६; -न्तस्य पावा ६, २, १९७;४, १४४; -न्तात् शैशि ३०७; -न्तानि अप्रा २,४,१६; १८; -न्ते माशि १०, ७; १३, १०; याशि २,४१[२];४२; नाशि २,४,५;६; पावा ६,२,१९७.

नकारान्त-ग्रहण - -णम् पावा ६,४,१३३.

नकारान्ता ( न्त-अ)र्थ- -र्थम् पावा ६,१,१७०.

नकारा(र-आ)बाध- -धे अप्रा २,४,१६; १८[२].

नकारा( र-अ )भाव- -वः पावा ६,१,१००.

नकारा( र-अ )वग्रह- -हे अप्रा २,३,२५.

नकारो(र-उ)पध-षकार[f]- -रः शैशि २९९.

नकारो(र-उ)पध-हकार[f]- -रः शैशि २९७.

१न-ट- -टाभ्याम् शैशि ९६.

१न-त- -तयोः शैशि ९७.

न-त्व- -त्वे पावा ८,२,४८.

न-पर°- -रः तैप्रा ४, ३२; -रे पा ८,३,२७.

१न-म- -मौ शौच ३,३७.

नम-पर°- -रे ऋत ४,४,१४.

†नयत्पर[g]- -रः याशि २,५७.

न-लोप- -पः पा ५, १, १२५; ६, ३,७२; ८, २, २; ७; पावा १, १,३९; २,४,१७[h]; ७,१,८९[i]; -पस्य पावा ६, ४, १२०; -पे अप्रा २,४,७; शौच.

नलोप-प्रतिषेध- -धः पावा ८, २,७.

नलोप-वचन- -नम् पावा ४,१, ७८; १५८; ७,२,२०.

नलोपा(प-अ)भाव- -वः पावा ६, १,६७.

न-शब्द-प्रत्यय- -यः अप्रा २,३, १६.

ना( न-अ )न्त°- -न्तात् पा ५,२, ४९.

नो(न-उ)प(धा>)ध°- -धात् पा १,२,२३.

√†नंश्, नश्(वधा.), नशते आपमं २,११,६; नशत् आश्रौ ७,४,४; निघ २,१८.

नशीमहि वाश्रौ १,५,४,३०†; †आनंट्[j] आश्रौ २, २०, ४; ३,८,१[२]; शांश्रौ १३,४,३; निघ २,१८.

नंशुक- पाउ २,३०.

नंष्ट्वा √नश् (अदर्शने) द्र.

?न आगात्[k] वाश्रौ १,३,२,१८†.

नक् पाग १,१,३७.

नकार- प्रमृ. न- द्र.

?नका३३रिणाम् लाश्रौ ७,८,२.

नकि, नकिम् प्रभृ. १न द्र.

१नकुल[l]- पा ६,३,७५; पाग ५,३, १०७[1]; -लः विधं ४४, २०; सु २८,१; अप्रा ३,४, ४†; ८; -लम् पागृ २, ७, ११; ऋप्रा १७, १४[m]; -लाः अप ७१, ३,५; उनिसू ८ : १०[n].

नकुली- -ली बौश्रौ १८, ४५ : ८; गोगृ ३,४,२८†.

१नाकुल- पा ५,३,१०७.

नकुल-चेटक- -काः अप ५७,२,६.

नकुल-विडाला( ल-अ )पहरण- -णे शंध ३२२.

---

a) = वर्ण-विशेष- । b) °रेषु इति लासं. । c) षस.>द्वस.>षस. । d) षस.> मलो. कस. । e) विप. । बस. । f) बस.>कस. । g) <न यत् पुरः (मा २०, ८२) । h) तु. पाका. । i) तु. पासि. । j) वैप १ द्र. । k) पाठः? अनागस्-> -गाः इति शोधः (तु. सप्र. हिश्रौ ६, ३,१७) । l) °का इति पाका. । m) = तद्वर्ण-वत्- । n) = छन्दो-जाति- ।

नकुला(ल-अ)हि-बिडाला (ल-आ)
खु– -खूनाम् शंध ३७८.

२नकुल[a]– -लः साअ १,४६४.

२नाकुल[b]– -लः ऋप्रा १७,४५; –ले बृदे ८,१४.

√नक्क् पाधा. चुरा. पर. नाशने.

नक्त[c],क्ता– -क्तम् शांश्रौ ५,२०, ८; आपश्रौ; बौश्रौप्र ४४ : ६; वैध ४,७,९?[d]; या ७, २७†; पाग १,१,३७; –क्ता अप ४८,७४†; बृदे ३,९; निघ १, ७†; या ८, १०³ф.

नक्तं-चर– पाग १, १, ३७[e]; –†रेभ्यः कौगृ ३,१०,१७; शांगृ २,१४,१६; कागृ.

†नक्तं-चारिन्– -रिणः आग्निगृ २, १, ३ : २१; भागृ; –रिणम् आपमं २,१४,१; –रिभ्यः आगृ १, २, ८; आग्निगृ १, ७, २ : ११; मागृ २,१२, १८; –रीणि या २,१८$.

†नक्तंचारिणी[f]– -णी आग्निगृ २,१,३ : २३; हिगृ २,३,७.

†नक्तं-जा(त>)ता[c]– -ता कौसू २६,२२; अअ १,२३.

नक्त–नीलोत्पल-कमल–पलाश— कोमल– -लेषु अप ६५,१,४.

नक्तं-दिव– पा ५,४,७७.

नक्तं-भाग– -गानि अप १,५,२; ६.

नक्ता(क्त-आ)शिन्– -शी शंध १५९ : ११; विध ५०,४३; ९५,५.

नक्तो(क्ता-उ)षास्[c]– -†षासा काश्रौ १६,५, ३; १८,४, २; आपश्रौ; वैश्रौ[g] १८,८ : १; १९,६ : ८६; ८७;१३०; –षासौ बृदे ३,८.

नक्र[h]– पा ६,३,७५; –क्राः अप ६२, ३,२.

√नक्ष्[i],> इनक्ष् पाधा. भ्वा. पर. गतौ [व्याप्तौ इति निघ., या.] †इनक्षत् आपश्रौ २१, १२, ९; वाश्रौ ३,२,२, ३६; हिश्रौ १६, ५,३.

नक्षते या ४, १८; †नक्षति आश्रौ ४,७,४[j]; शांश्रौ ५,१०, १८[j]; निघ २,१४; १८; नक्षन्ते या १०, २१†; नक्षसे वैश्रौ १८, ५ : ८†; नक्षन्त या ७, ३०†.

†नक्षत्–> °द्-दाभ[c]– -भम् निघ ४,३; या ६,३ф.

नक्ष– पाउना ३,६५.

नक्षत्र[c]– पाउ ३,१०५; पा ६,३,७५; -त्रम् शांश्रौ २, ५, ५; आपश्रौ; आज्यो ७,११; २१; ११,६;७; –त्रस्य आपश्रौ १०,१२,३; अप; –त्राणाम् शांश्रौ ४, १०, १[k]; १०,२१,१०; आपश्रौ; या ३, २०;–त्राणि शांश्रौ १४,७८,२; आपश्रौ; या ३,२०ф; –त्रात् पा ८,३,१००; पावा ४,२, १०४; –त्राय बौश्रौ २८, ४ : २२; गोगृ २,८,१२; बौध ३, ८, ९; –त्रे शांश्रौ २,१,८××; आपश्रौ; पा १,२, ६०; २,३,४५; –त्रेण वाधूश्रौ ४, ९४² : ५; आगृ; पा, पावा ४, २, ३; –त्रेभ्यः आपश्रौ ६,८, १××; बौश्रौ; पा ४, ३, ३७; पावा ४, ३, ३४; –त्रेषु शांश्रौ १०, २१, ११²; आपश्रौ; कौगृ १, १०, १२[l]; –त्रेषु३ बौश्रौ १६, ८ : ८; –त्रैः कौसू १३५,९.

नाक्षत्र[m]– -त्रः द्राश्रौ ८,४,३; ५; लाश्रौ.

नक्षत्र-कल्प[n]– -ल्पः चव्यू ४ : ८; –ल्पम् अप १,१,१.

नक्षत्र-गण– -णम् या ५,२१.

नक्षत्र-ग्रह–चन्द्रमस्[o]– -माः अप ६३,३,१.

नक्षत्र-ग्रहो(ह–उ)पसृष्ट–> °ष्ट-भयार्त-रोगगृहीत– -तानाम् अशां १७,१.

नक्षत्र-चारिन्– -रिणः अप ५२, ५,४.

नक्षत्र-ज– -जम् वेज्यो ३५.

नक्षत्र-जीविन्[p]– -विनः विध ८२, ७.

नक्षत्र-तारका– -काणाम् अप ६३, १, ७.

नक्षत्र-दक्षिणा[q]– -णा अशां १२, ६; –णाः अप १८², १९, ४; अशां १३,५; –णाम् अप १,५०,१०.

नक्षत्र-दर्शन– -नात् आश्रौ ८,१३, २२; वाश्रौ.

१नक्षत्र-देवता– -ताः वेज्यो ३५; –तानाम् कागृ ४९,१; –ताभ्य

---

a) =ऋषि-विशेष- । व्यु. ? । b) विप. । तेनप्रोक्तमित्यर्थे अण् प्र. । c) वैप १ द्र. । d) कथम् इति पाठः ? यनि. शोधः (तु. सप्र. बौश्रौप्र.) । e) तु. पागम. । f) सपा. नक्तंचा° <> निशीथचा° इति पामे. । g) °षसा इति पाठः ? यनि. शोधः (तु. आपश्रौ १६, १०,११) । h) = जलचर-भेद- । व्यु- ? (तु. वैप १ नाक्र- टि.; वैतु. पा. प्रभृ. <१न+√क्रम्) । i) या ३, २० परामृष्टः द्र. । j) पामे. वैप १,१७६१ f द्र. । k) पामे. वैप १, १२९८ d द्र. । l) पामे. पृ ४६३ b द्र. । m) विप. । तस्येदमीयः अण् प्र. । n) =ग्रन्थ-विशेष- । o) द्वस.>मलो. कस. । p) = ज्योतिर्विद्- । q) उप. = २दक्षिणा- ।

आग्निगृ २,२, १-२ : ६; शंध १३२†; –ताम् मागृ १,१०, ९; २,२,१५.
२नक्षत्र-देव(त>)ता[a]— -ताभ्याम् आग्निगृ २,२, १ : ४; २ : ३; –ताम् आगृ २,४,१२.
नक्षत्र-देवते( ता-इ )ष्ट–नामन्[b]— -मानः वागृ ३,१.
१नक्षत्र-दैवत— -तम् जैगृ १,९ : ५.
२नक्षत्र-दैवत[a]— -तान् अप १,४२, ५.
नक्षत्र-द्वन्द्व— -न्द्वे पा १,२,६३.
नक्षत्र-नदी-वृक्षा (क्ष–अ) भिधाना (न—अ)संयु(क्त>)क्ता[c]— -क्ताम् आग्निगृ १,६,१ : ३.
नक्षत्र-नामन्— -म कौगृ १, १६, ८; आग्निगृ २,१,५ : ३३; आपगृ.
नक्षत्रनामा( म-आ )दि— -दि वैगृ १,७ : ८.
नक्षत्र-नामधेय— -येन बौगृ २, १,५.
नक्षत्र-ना( मन्> )मा[a]— -माः आपगृ ३,१३.
नक्षत्र-निर्देश— -शः बौध २, १,४७.
नक्षत्र-पथ— -थम् बौश्रौ १०, ४६ : १७; २०; अप ५२, १४, २; –थेन वाधूश्रौ २,१९ : १.
नक्षत्रपथ-चारिन्— -रिणाम् आग्निगृ २, ५, १ : ४; जैगृ २, ९ : ३.
नक्षत्र-पात— -तस्य अप ५०,९,३.
नक्षत्र-प्रतिमा— -माः अशां ५, ८.
नक्षत्र-प्रयोग— -गे बौश्रौ ५,१ : २.
नक्षत्र-प्रवचन— -नात् द्राश्रौ ९, ४, २३; लाश्रौ ३,८,१४.
नक्षत्र-भाग— -गे अप १,६,५××.
नक्षत्र-भोजन— -नम् आग्निगृ ३, १२,१ : ८.
नक्षत्र-मित–मास— -सः निसू ५, ११ : ६.
नक्षत्र-यज्ञ— -ज्ञेषु कागृ ४९,१.
नक्षत्र-याग— -गः अप १८[२],१९,३.
नक्षत्र-योग— -गम् लाश्रौ ८,१,५; –गे पावा ३, १, २६; –गेषु आज्यो १४,७.
नक्षत्र-योग–काल—ज्ञ— -ज्ञः अप १,४२,२.
नक्षत्र-राज— -०ज अप १[२],१,३.
नक्षत्र-राजन्— -जानम् अअ ६, १२८.
नक्षत्र-वंश— -शस्य अप ५२,६,३.
नक्षत्र-वर्ग— -र्गेषु आज्यो ७,७.
नक्षत्र-वेदितृ— -तारः अप १,६,८; ७,९.
नक्षत्र-श्राद्ध— -द्धम् आग्निगृ ३, ३, १ : ३;१२; –द्धे आग्निगृ ३, ३, २ : १३.
नक्षत्र-सत्र— -त्रेण बौश्रौ २८,४ : ३०.
नक्षत्र-समता— -ताम् अप १,९,३.
नक्षत्र-संप (न्न>) न्ना— -न्नाम् आज्यो ६,७.
नक्षत्र-सूचक[d]— -कः काध २७९ : ५.
नक्षत्र-स्तुति— -तिभिः अप १, ४२,४.
नक्षत्र-स्तोम[e]— -माः शांश्रौ १४, ७८,१.
नक्षत्र-स्नान— -नानाम् अप १,४२, १; –नानि अप १८[२],१९,४.
नक्षत्रस्नान-कोविद— -दः अप १, ४२,६.
नक्षत्र-हविस्— -विषाम् बौश्रौ २८, ३ : १९; –वींषि अशां १२,१.
नक्षत्रहविर्-मध्य— -ध्ये बौश्रौ २८,३ : १३.
नक्षत्र-होम— -मः अप १८[२], २, ९; –मे वैगृ ६,५ : १.
नक्षत्रा( त्र-अ )ङ्ग–विद्या[f]— -द्या वाध १०, २१.
नक्षत्रा(त्र-आ)देश–वृत्ति[g]— -त्तिः शंध २०१.
नक्षत्रा(त्र-अ)न्त–गामि(न्>)नी— -नी अप ६३,१,९.
नक्षत्रा(त्र-अ)र्ध–गत— -ते अप ६३, २,३.
नक्षत्रा(त्र-आ)श्रय[a]— -यम् मागृ १, १८,२; गोगृ २, १०, २१; द्रागृ २,४,१२.
नक्षत्रिय— पा ४,४,१४१.
नक्षत्रे(त्र-इ)ष्टका[h]— -काः आपश्रौ १७, ६, ५; बौश्रौ; –कानाम् बौश्रौ २२, ८ : ३२; –काभिः बौश्रौ १०, ४६ : २३; १४, ३० : ८; –काभ्यः बौश्रौ १७, २४ : ८;२५ : १०; २६ : १०; –कासु आपश्रौ १७,६,११.
नक्षत्रे( त्र-इ )ष्टि[i]— -ष्टयः आग्निगृ १,२,१ : १४; बौगृ ३,१,२४; –ष्टिम् वैध २, ५, ४; –ष्टीः बौश्रौ २८,३ : १.
नक्षत्रो(त्र-उ)पद्रव— -वेषु अप ६४, १,३.
√नक्ष्, क्ष पाधा. भ्वा. पर. गतौ, नक्ष्यति निघ २,१४†[j].
नक्ष[b]— पाउ ५, २३; पा ६, ३,७५; पाग २,४, ३१; ४,१,४५;५६;

*a)* विप. । बस. । *b)* द्वस.>बस. । *c)* द्वस.>षस.>तृस. । *d)* ज्योतिर्विद्- । *e)* =याग-विशेष- । *f)* =ज्योतिर्विद्या- । *g)* षस.>बस. । *h)* वैप १ द्र. । *i)* =इष्टि-विशेष- । *j)* लघुशाखीयः पाठः ।

२, ८०[a]; ५, २, २४; ६, ३, १०८[b]; –खम् अप्रा ३,४,५†; –खस्य माशि ४, १०; –खाः विध १, २७; २२, ८१; ९६, ५८; –खात् आग्निगृ १,१,१ : २५; भागृ १, २ : १५; हिगृ १, १, २३; –खान् माश्रौ १, ४,१,३××; लाश्रौ ९, २, २०; वाध २४, ५; –खानि शांश्रौ १८,२४,२०; आपश्रौ; –खे ऋत ५, १, ९; –खेन आपश्रौ १, ११,८;२,३,३; भाश्रौ; –खेभ्यः आपमं १,१७,५; –खेषु आपश्रौ १२,४,१५; –खैः आपश्रौ १२, ४,१४; वाध.

नखी– पा ४,१,४५.

नख-कृत्[c]– -कृतः बौश्रौ १५,१३ : १५; १६ : १.

नख-ग्रह– -हः याशि १,६१.

नख-च्छेदन– > °न-वादन-स्फोटन– -नानि हिध २,५,१०२[d].

नख-जाह– पा ५,२,२४.

नख-निकृन्तना(न–आ)दि– -दि काश्रौ २५,१४,३.

नख-निर्भिन्न,न्ना– -न्नम् बौश्रौ १२, ५ : २२; -न्नानाम् काश्रौ १५, ३,१४; -न्नायाम् बौश्रौ २६, ६ : ६.

नख-प्रच[a]– पाग २,१,७२.

नख-भस्मन्– -स्मनाम् अप ७०, ६,१.

नख-मुख– -खात् पा ४,१,५८.

नख-मुच– पावाग ३,२,५.

नखं-पच– पा ३,२,३४.

१नख-र– पा ४, २, ८०; पागम ४३१.

नख-रज(L,अ]न>)नी[e]– पा, पाग ४, ३,१६७.

नख-रोम-व्यादेश– -शः या १४,६.

नख-लोमन्– -मानि विध ७१,४४.

नखलोमा(म-अ)पाकरण– -णम् हिध २,१,९८[f].

नख-वादन– -नम् आपध २, २०, १५.

नख-विष्किर[g]– -रान् शंध ४२६.

नख-शोधन– -नम् शंध ५३.

नख-श्च्युत– -तम् वाध १४,३०.

नखा(ख-अ)ग्र– -ग्रात् बौध ४, १, २५; वाध २५, ५.

नखा(ख-अ)न्त– -न्तम् वैगृ २,१३ : ११.

नखि– पाउव्र ४,१३९.

नखिन्– -खिनः वाश्रौ ३,४,३,२२; -खिनाम् विध ५,१८८.

२नखर– पाउव्र ३,१३१; पाग २,४, ३१; पावाग ५,२,१०३[b]; -रः काश्रौ १५, ३,१७[h].

नाखर–पावा ५,२,१०३.

नखररज(न>)नी– नखरजनी– टि. द्र.

१नग[i]– -गान् अप ६८, ३, ११; -गानाम् अप ६४,४,६; -गेषु अप १,२६,१†.

नग-नाग-निभ– -भैः अप ६४,१, ८.

२नग[j]– पाउ ५,६१; पा ६,३, ७७; पाग ४, २,८०.

१नग-र– पा ४,२,८०; पावा ५,२, १०७.

नग-श्रेष्ठ[k]– -ष्ठम् सु १३,५.

२नगर[l]– पाग ४,२,९५[m]; -रम् बौश्रौ २४, १४ : ५; माश्रौ; -राणि अप ६२,१, ७; -रात् अप ६८,५,२३; -रे अप ७०[३], ६,३; बौध; पा ६, १, १५५; २,८९; -रेषु कौसू १४१, ३९; अप ५३,५, २; वाध १३, ११; आपध २, २६,४[n].

नगरी[m]– > °र्या(री-आ)दि– -दौ वैध ३, १५,११.

नागर– पाग ५, १, १२८; -रः अप ५१,२,२[२]; -रम् अप ५१,२, २[२]; -राः अप ५१, २, १; -राणाम् अप ५१,४,३; -रान् अप १९, १, १२; ५१, १, १; -रैः वाध १६,२०.

नागर्य– पा ५,१,१२८.

नागरक– पा ४,२,१२८.

नागरेयक– पा ४,२,९५.

नगर-काक– पाग २,१,४८.

नगर-ग्राम-याजक– -कस्य काध २७९ : ४.

नगर-चतुष्पथ– -थे मागृ २, १४, २८.

नगर-निवासिन्– -सिनाम् शंध २५५.

नगर-प्रतिषेध– -धः पावा २,४,७.

नगर-प्रवेशन– -नानि आपध १, ३२,२१; हिध १,८,६३.

a) अर्थः ? । b) तु. पागम. । c) = कर्मकृद्-विशेष- । d) सपा. आपध २,२०,१५;१६ विशिष्टः पाभे. । e) तु. पासि. । = ओषधि-विशेष- । [पक्षे] पाका. नखररजनी- इति ? । f) सप्र. आपध २,५,१६ लोमसंहरणम् इति पाभे. । g) = प्राणिभृज्जाति-विशेष- । उस. उप. < वि√कॄ कर्तरि कृत् । h) विप. (असि-) । i) वैप॰१ द्र. । j) अर्थः व्यु. च ? । k) पूप. = वृक्ष- । l) नाप. । व्यु.? । = १नगर- इति अभा. । m) तु. पाका. पागम. । नगरी- इति भाण्डा., पासि. । n) सपा. हिध २,५,१९९ निगमेषु इति पाभे. ।

नगर-मर्दिन्[a]-(>नागरमर्दि- पा.) पाग ४,१,९६.

नगर-वायस- पाग २,१,४८.

नगर-श्वन्-पाग २,१,४८[b].

नगरा (र-आ)धिपत्य- -त्यम् विध ९२,३१.

नगरा(र-अ)न्त- -न्ते पा ७,३,२४.

न-गोह्य- १न द्र.

नग्न, ग्ना[c]- पागम १५५[d]; -ग्नः बौश्रौ १५,३७:२; वाधूश्रौ ३, ७०:६;८; आगृ; -ग्नम् बौश्रौ ८,१४:२८;४२××; हिश्रौ ९,४, ३२; कप्र २, १०, १०; -ग्नया वाधूश्रौ ३,७०, ६; ८; -ग्नान् वाधूश्रौ ३, ९०:३××; विध ८२,१,२७; -ग्नाम् आगृ ३,९, ६; कौगृ; गौध ९,५०[e]; -ग्नेन आपश्रौ १३,१५,९.

नाग्न्य- -ग्न्यात् वाधूश्रौ ३, ९:९.

नग्न-क- -कात् अप्रा ३,४,१†.

नग्निका[f]- -का वैगृ ६,१२:२(?); गोगृ ३,४,५; -काम् मागृ १, ७,८; वैगृ.

नग्नं√कृ>°कृत्य वैश्रौ १६,१८: १६; हिश्रौ ९,४,३२.

नग्न-पाषण्ड-भूयिष्ठ- -ष्ठाः अप ७०[२], १६, ४.

नग्न-प्रछन्न- -न्नः कौसू १४,६.

नग्न-प्रतिच्छन्द- -न्दः वैगृ ५, ६: २६.

नग्न-मुषित- पाग २,२,३१.

नग्न-वक्त्र-ज[g]- -जः माशि १२,५.

नग्न-शुक्ल-क्लीबा(ब-अ)न्ध-श्याव-दन्त-कुष्ठि-कुनखि-वर्जम् वाध ११, १९.

नग्नहु[c]- -हुः आपश्रौ १९, ५, १०; बौश्रौ; -हुना आपश्रौ १९,५,११; हिश्रौ २३, १, ८; -हुम् बौश्रौ १७,३१:३; -होः बौश्रौ १७, ३१:२०.

नग्नहु-चूर्ण- -र्णानि काश्रौ १९,१, २०.

नग्नहु-व्रीहि-यव-गोधूम-शष्प- -ष्पाणि माश्रौ ५,२,४,२.

?नघारि( ष> )षा[c]- -षाम् अअ ८,२[h]

नचि-केत[i]- >नाचिकेत[i]- पागम १५५; -तः आपश्रौ १९, १३, १७××; बौश्रौ; -तम् आग्निगृ १,२,१:१२; बौगृ ३,१,२३; -तस्य बौश्रौ १९,६:१.

न-चेत् १न द्र.

नञ्[j]- पाग १,१, ३७; नञः अप्रा ३, ४,४[k]; पा ५,४, ७१××; पावा; नञा पावा २,४,८१.

नञ्-कु-निपात- -तानाम् पावा ६, २,२.

नञ्-पूर्व- > °र्व-ग्रहणा (ण-आ) नर्थक्य- -क्यम् पावा ७,३,४७.

नञ्पूर्वा(र्व-अ)क्षि[l]- -क्षेः बृदे ३,९.

नञ्-वत्- पा,पावा ६,२,१७५.

नञ्-विशिष्ट- -ष्टे पावा २, १, ६०; -ष्टेन पा २,१, ६०.

नञ्-समास- -सः, -सात् पावा ५,१,११९; -से पावा २,२,६; -सेषु पावा १,४, १.

नञ्-सु- -सुभ्याम् पा ६,२,१७२; पावा ६,२,१०८.

नञ्-स्वर- -रः पावा ६,१,१५४.

√नट् पाधा. भ्वा. पर. नृत्तौ; पर. चुरा. अवस्यन्दने, भाषार्थे ?.

२नट[m] पाउ ४, १०४[n]; पा, पाग ५,३,९८[b]; पाग ४,१, ४१; २, ४९[o].

नटी- पा ४, १, ४१.

नाट्य- पा ४,३,१२९.

°नाट्या(ट्य-आ)चार्य- ता- -ता बौध २,१,४४.

न(ट्य)ट्या[p]- पा ४,२,४९.

नाटक- -केषु नाशि २,८,२९.

१न-ट- न- द्र.

नटमक-, °मस्तक- नाट- टि. द्र.

१नड[c]- पाग ४,२,४९[o]; ५४[q]; ८०[r]; ९१;५,२, १३५; ६,३, ११६[r]; -डः अपं ४:३४; -†डम् कौसू ६९, ७; ७१, ५; ८; अअ १२, २; -डैः कागृ ४५,८.

नडकीय- पा ४,२,९१.

नड-भक्त- पा ४,२,५४.

नड-म (य>) यी- -यीम् कौसू ७१,३.

नड-वत्- पा ४, २,८७.

नड-वल- पा ४,२,८८.

नड-स- पा ४,२, ८०.

नडा-गिरि- पा ६,३,११६.

नडि(न्>)नी- पा ५,२,१३५.

नडिल- पा ४,२,८०.

---

a) व्यप. । b) तु. पागम. । c) वैप १ द्र. । d) <न+ग्ना- >बस. । e) तु. संस्कर्तुः टि. Büh. च । f) [कन्यायाः] संज्ञा-विशेष-। g) विप. । बस. उप. =दन्त- । h) नघा इति पाठः ? यनि. शोधः (तु. मूको.) । i) वैप ३ द्र. । j) =१न । k) नयः इति पाठः ? यनि. शोधः । l) बस.>कस. । उप. =√अक्ष् । m) =नर्तक- । अपू प्र. । n) <√नम् इति ? । o) नड- इति पाका., पागम. । p) नाप. । q) नद- इति पाका. । r) नभ्र- इति [पक्षे] भाएडा. । नल- इति पागम. ।

नड्या- पा ४,२,४९.

२नड[a]- पाग ४,१,९९;११०.

नाडायन- पा ४, १, ९९; ११०; -नाः बौश्रौप्र ३ : १४.

नडकीय- प्रभृ. १नड- द्र.

नडन्तिका[b]- -कायाम् विध ८५,१९.

१न-त- न- द्र.

२,३नत-, नति- √नम् द्र.

न-तद्रूप- १न द्र.

नस्त[a]- (>नास्तायन- पा.) पाग ४, १,११०.

न-त्व- न- द्र.

नत्वा √नम् द्र.

√नद्[c] पाधा. भ्वा. पर. अव्यक्ते शब्दे; चुरा. उभ. भाषायाम्, नदति अप १,३१,२; ४८,९†[d]; ७२, २,३; निघ ३, १४†[d]; नदन्ते अप ६७, ६, ५; नदन्ति अप ७०[3], ११, २७; ७१, १४, ४; अनदत>ता तैप्रा ३,१२†. नानदैताम् कौसू ९६, ३†.

नद[e]- पाग ३,१,१३४; ४,२,५४[f]; ८०; -दः †अप ४८, ९७[g]; ११५[3]; †निघ ३,१६[g]; ४, २; या ५, २ф; -†दम् शांश्रौ १८, १, १३; लाश्रौ; -दस्य शांश्रौ[h] १८,१,१४; १५; २१; शाश्रौ ३, ३, २, १२; बृदे १, ५३†; या ५, २†; -देन शांश्रौ १८,१,१२[h].

†नदी- पाग ४, २, ९७; -दयः[i] बौश्रौ १८, १८ : १६; आग्निगृ २, ५, ११ : २७; -दी आपश्रौ १४, २०, ४; बौश्रौ; या ४,१५; ११, २५; पा २,४, ७; ऋत ४, ७, ५; -दीः भागृ २, १३ : १४; हिगृ; या २, २४; -दीनाम् आश्रौ ३, ७, ६†; बौश्रौ; कौगृ १३, १३, १५†[j]; †या २, २६; ४, १७××; -दीभिः ऋअ २, ३, ३३; या ११, ४९†; पा २,१, २०; -†दीभ्यः शांगृ ४,१४, २; आग्निगृ; -दीम् शांश्रौ १६, १८,१८; काश्रौ १३, ३,२६[k]; आपश्रौ २१, २०, ३[k]; बौश्रौ २९, १२ : १७; हिश्रौ १६, ६, ४१[k]; आगृ; या २, २४; ७, २०; १४,३३; -दीषु बौश्रौ १५, १६ : ८; आग्निगृ; -द्यः आपश्रौ १६, ६, ४†; माश्रौ; या २,२४ф; २५; -द्यः३ शौच ३, ६५; -द्या आश्रौ ६,६,११; -द्याः वाश्रौ ३, २,५, ४३†[k]; वैताश्रौ ३४,९†[k]; बौगृ; -द्याम् आग्निगृ २, ६, ८ : ५; वैगृ ४, १० : ११; अप; पा ४, २,८५; -द्यै बौश्रौ १६, २३ : ५†[k]; -द्योः वैताश्रौ ३६,२७†; -द्यौ बौश्रौ १८,३९ : १.

नादेय[e]- पा ४, २, ९७; -यम् विध ६४,१७; -याः बौश्रौ २४, ५ : २२; -यान् बौश्रौ १५,१६ : ८; अप्राय ५, ६; -यानि बौश्रौ २२, २० : ७[2].

नादेयी- -यीः विध १, १४.

नाद्य[e]- पा ४, ४, १११; -†द्यः आपश्रौ १६, ७, ४; वैश्रौ १८, ४ : २१; हिश्रौ ११,२,२.

नदी-कक्ष-वन-दाह-शैलो (ल-उ) पभोग[l]- -गाः वाध १९,२६.

नदी-कच्छ- -च्छः या ४,१८.

नदी-गिरि-तटाक- -केषु अप १, ४४,१.

नदी-जल- -ले विध ९०,२८.

नदी-तट- -टे अप २१, ४,३.

नदी-तटाक-कूप- -पानाम् वैगृ १,२ : २.

नदी-त(म>)मा- -०मे आश्रौ ७,११,२२†.

नदी-तर[m]- -रम् आपध १,३२,२६; हिध १, ८, ६७; -राणाम् चाअ ३९ : २[n]; -रे पावा १,१,२२[2].

नदी-तीर- -रम् वैगृ ५, ३ : ४; -रे आग्निगृ २,५,४ : २; ६ : १××; हिपि; -रेषु आग्निगृ ३,४,५ : ९.

नदी-तीर्थ-समुद्र- -द्रेषु बौपि ३,१०,३.

नदी-तोय- -ये बृदे ४, २१.

---

a) =ऋषि-विशेष-। व्यु. ?। b) =नदी-विशेष-। व्यु.। c) या ५, २ परामृष्टः द्र.। d) धा. अर्चायां वृत्तिः। e) वैप १ द्र.। f) १नड- टि. द्र.। g) स्तोतृ-नामन्-। h) =नदम् (ऋ ८, ६९,२) इति मन्त्रेण। i) वैप १,१२१९ l द्र.। j) सपा. नदीनाम् <>नदीभ्यः इति पाभे.। k) सपा. नदीम् <> नद्याः <> नद्यै इति पाभेः। l) द्वस. > षस.। कक्ष- =शुष्क-तृण-, दाह- =श्मशान-। m) =नदी-तरण-। n) विप.। उस. उप. कर्तरि कृत्।

